**रत्नाङ्गदः** - सिहाभ्यवस्कन्दने व्याघ्र कि कुर्यात्। पश्य पश्य

द्वारेऽवतीर्य शिबिकातलत किरीटपादूज्ज्वलश्चटुलचामरवीज्यमान ।
सवेष्टित कनकवेत्रधरै पुरस्तादन्तर्मठ ननु विवेश स एष धीर ।१८

ननु गच्छन्नेवाय महाशयो यतीन्द्रमवलोक्य

तेजश्छटाजटिलमास्यमिद यतीन्दोर्मूर्तिश्च वक्ति तपसो गरिमाणमारात् ।
शान्ताद्भुताकृतिरय यतिराजचन्द्रश्चकीर्ति लोचनचकोरकपारणां न ।।१९

**यतीन्द्रः** - (द्वारि प्रविशन्तं वेङ्कटार्य निर्वर्ण्य)

वक्त्रप्रभा विवृणुते विबुधाग्रणीत्वं
दृष्ट्योर्द्युति कथयते प्रतिभा प्रभूताम् ।
तेजस्विता स्फुटयतेऽपि च देहशोभा
नेत्रोत्सव खलु नृणां भुवि वेङ्कटार्य· ।। २०

अहो भव्योत्साहं मुखमनघगम्भीरमधुरं
ह्यहो विद्यादर्पाज्जगदगणयन्त्याविव दृशौ
अहो सिहस्येव प्रथितविभवो धैर्यमहिमा
समस्ताया पृथ्व्या खलु जयपताका ध्रुवमयम् ।। २१

**चित्ररथः** - सखे पश्य पश्य

नारिकेलकदलीफलजालप्रोल्लसल्ललितभाजनहस्त. ।
शास्त्रशासनमसावनुरुन्धन् सयमीन्द्रमभिनन्दितुमुत्क ।। २२

न कर्मणा न प्रजयेति मन्त्रमुच्चार्य कुर्वन् विशदं तदर्थम् ।
उत्कीर्य षट्तन्त्रसमञ्चितार्थाश्चित्रार्पिताभामकरोत्सभां ताम् ।।२३

अहो कर्तव्यकुशलताऽस्य

मन्त्रार्थवर्णनमिषेण कुशाग्रबुध्दि
स्वां वैदुषीमसदृशी सदसि प्रकाश्य ।
शास्त्रेषु दुर्विषहता च निजां प्रदर्श्य
दित्सन् फल प्रणिजगाद सुधीस्सुधीरम् ।। २४

सस्कारतस्सुरभिलं श्रुतिसम्प्रयुक्तादस्माभिरर्पितमतीव सभाजनार्हम् ।
ग्राह्य फलं तदिदमादरत प्रहर्षादुत्थाय देशिकपुरन्दर संयमीन्द्र ।।२५

**रत्नाङ्गदः** -सखे पश्य पश्य कीदृशी शास्त्रवश्यताऽस्य पाण्डित्य-दर्पावधीरितजगत्त्रयोपि इत पूर्वमेतद्यतीन्द्रोक्तिप्रणालीप्रधूमितमानसोऽपि कटितटवेष्टितपटो वेङ्कटार्य. यतीन्द्रं प्रणमति।

(पण्डितमण्डलाखण्डलस्सुरपुरमहाराजगुरुर्वेङ्कटार्यमहाशय प्रणमतीति दौवारिकौ बोधयत·)

**यतीन्द्रः** - ननु भो वेङ्कटार्य अरोचनमपि शास्त्र भवादृशेभ्य एव भयादार्तव्यमस्माभिः। नो चेत् भवादृशेषु प्रणमत्सु को नाम पुमान् कुड्यकुसूलादिवन्निर्विचेष्टमुपविष्टो भवेत्। (तादात्विकनृपतिसान्निध्यराज गुरुत्वादिसकलकारणकलापसम्पद वेङ्कटार्यस्य तत्तादृशी तेजस्वितां च समालोच्य सानन्दमुत्थाय वेङ्कटार्येण समर्प्यमाण फलभर प्रतिगृह्णाति)

(सामाजिकाना सानन्दकरतालध्वनिः)

**धर्माध्यक्षः** - (जनान्तिकं यतीन्द्रकर्णे किमपि कथयति)

**यतीन्द्रः** - (चित्रासनद्वयमानाय्य एकस्योपरि अपरं प्रक्षेप्य) भो पण्डितचण्डभानो अलङ्क्रियतां तावद्द्विगुणरमणीयमिदमासनम्।

(वेङ्कटार्य तत्र उपविशति)

(ततश्चामराभ्यामुपवीज्यमानं विशिष्टाद्वैतकिरीटधारिणं चित्रासनपार्श्व

परिमुक्तपादुकाद्वय स्वकुलगुरु वेङ्कटार्य कटितटवेष्टितपटस्सुरपुर महाराज· वेङ्कटक्षमानेता सभक्तिप्रकर्ष द्वादशकृत्व प्रणमति। तत्र भवान् वेङ्कटार्योपि वैजयिकीभिराभ्युदयिकीभिराशीर्भि· राजानमुप बृहयति। वेङ्कटक्षमारमणोऽपि वेङ्कटार्यैरादिष्टस्समुचितमुपविशति)

**यतीन्द्रः** - (राजानमुद्दिश्य) असदृशोऽयमाचार्यो महाराजस्य।

**राजा** - (सोन्मादमिव) यथा असदृश आचार्यस्तत्रभवान् गद्वाल क्षमानेतु· तद्वत्।

**सर्वे सामाजिकाः** - (स्वगतम्) साधु। महाराजेन सम्यगुत्तरितम्।

(वेङ्कटार्यस्य मातुलेय भारद्वाजशेषाचार्य मनसा राजानमभिनन्दन्)

(प्रकाशम्)

**शेषाचार्यः** - राजन्नेष विमृश्यतामसदृशी व्याहारशैली गुरो.

किञ्चैषा घटनाप्यहो असदृशी ह्याचार्ययोरेतयो ।

**राजा** - (आन्तश्श्लाघम्-प्रकाशम्)

कस्याप्यत्र न वै विदामविषयं पश्यामि विद्वन्मणे।

(नोचेदान्तरमेतयो प्रविमलं कालुष्यत पङ्किलम् ।) २६

**धर्माध्यक्षः** - (स्वगतम्) हन्त विवृद्ध इव उभयो कलहकन्दलो यतीन्द्रव्यापार एषः। किमर्थमय यतीन्द्रः उदर्कमविमृशन् व्यवहरति। भवतु तावन्महाराजं विषयान्तरे अवतारयामि। (प्रकाशम्) महाराज सुदूरमधिरूढो गगनपदं मयूखमाली। अभ्यर्थ्यतां तावदविलम्बेन यतीन्द्र स्सुरपुरगमनाय।

(क्षमापतिस्तथानुतिष्टति)

**चित्ररथः** - सखे पश्य

सम्मान्येव यतीन्द्रमुज्ज्वलमतिस्स्वाद्वैदुषख्यापना
द्विभ्रान्तान् विरचय्य सर्वविदुषो बुध्वा च तद्वैदुषीम् ।
उद्वेलैर्बिरुदैरनन्यसुलभैर्भिन्दन् मनो दुर्हृदां
प्रत्यावृत्त उपागमत्पुनरसौ श्री वेङ्कटार्य पुरम् ।। २७

**रत्नाङ्गदः**- अनुरूपोऽस्य महापुरुष पुनरसौ स्वीयवशस्य।

**चित्ररथः** - पश्य अनुपदमेव

शिष्यैस्स्वे परितो वृतस्सुविशदश्वेतातपत्रोज्ज्वल
खेलच्चामरवीजितस्सुरुचिरामान्दोलिकामास्थित ।
उद्वेलैर्बिरुदैर्दिशो मुखरयन् श्रीचिह्नरावादिभि
स्संप्राप्नोदपि योगिराट् सुरपुरी राज्ञानुयातः पथि ।। २८

**रत्नाङ्गदः** - इत परं नियतमुखयोर्वादाहव प्रथिष्यते। यत सर्वतन्त्र स्वतन्त्रबिरुदकथाभि पूर्व प्रधूमितो वेङ्कटार्यस्य क्रोधानल प्रकृतप्रत्यक्ष दर्शनप्रवृत्तप्रणालीभि पर्याप्त प्रज्वलित । अस्य च महाशयस्य यदि किञ्चिदक्षिकोणे शोणिमा स्यात्तदा दुष्परिहरो बृहस्पतेरपि वदनसीम्नि मलिनिमा।

(नेपथ्ये डिण्डिमध्वनि ) (पुनर्नेपथ्ये)

हेहे हैतुकतल्लजा· शृणुत है श्व प्रातरारप्स्यते
श्रीश्रीवासयतीन्द्रवेङ्कटगुरूत्तंसाख्यसंख्यावतो· ।
शास्त्रोत्तेजितबुद्धिकौशलवलत्पुङ्खानुपुङ्खोन्मिष
द्युक्तिच्छद्मगशस्त्रजालजटिलो वादाहवः प्रोद्भट ।। २९

स्थेयं भवादृशैस्तत्र स्थेयभूतैर्महाशयै ।
इति वेङ्कटभूपालस्समादिशति सादरम् ।। ३०

**रत्नाङ्गदः** - (श्रुत्वा सकौतुकम्) सखे आवामपि तत्रैव वादाहवमव लोकितु गच्छावः (इति परिवृत्य) सखे चित्ररथ।

सभास्थानी पश्ये पृथुलमतिकौतस्कुतशतै
स्सुपूर्णा सूक्ष्मार्थग्रहणनिपुणोदग्रधिषणै ।
दुरालोकामीर्ष्याभिनयकुहनादम्भभरितै.
मनोज्ञां शत्रूणामपि गुणगणग्राहिहृदयै ॥ ३१

अत्र हि

निर्वर्तितौषसिकनित्यसमस्तकृत्य.
शौरे. कृताभिगमनस्त्वरया यतीन्द्र ।
मेध्यां बृसीमधिवसन् किमपि स्वकीयै
रास्ते रहस्यविषय विविधं विविञ्चन् ॥ ३२

**चित्ररथः**-किमन्यद्रहस्यमस्ति। अपरिहार्योपस्थितं वेङ्कटार्यैस्सह वादाहव मधिकृत्य कि कर्तव्यमिति पर्यालोचयते।

(नेपथ्ये श्रीकाहलगौरीकाहलादिध्वानाडम्बरः)

(पुनर्नेपथ्ये)

आसेतुस्यूतसीतापरिबृढचरणाम्भोजमुद्रात्समुद्रा
दा च क्षीराब्धिवीचीग्रसनरसलसत्कन्दरान्मन्दराद्रे. ।
धीमन्तस्सन्ति को वा हरमुकुटनटत्स्वर्धुनीस्पर्धिनिर्य
द्वाग्धारासारशाम्यत्कविकथकघटाश्रुत्युदन्यो मदन्यः ॥ ३३

इति बिरुदोद्घोषः

**चित्ररथः** - (श्रुत्वा) सखे रत्नाङ्गद पश्य पश्य पुरस्तात्।

बिभ्रत्स्वर्णकिरीटमुज्ज्वलतरं पादोल्लसत्पादुक
स्स्मेरोड्डामरचामरान्तरगतःश्वेतातपत्रोज्ज्वलः।

दन्तिद्योतिदिवाप्रदीपबिरुदो जाम्बूनदान्दोलिका
मातिष्ठन्नुपयाति वेङ्कटगुरूत्तसोऽमुकां ससदम् ।। ३४

**रत्नाङ्गदः-** सखे चित्ररथ पश्य पश्य। दर्शनीयमिम सन्निवेशं वेङ्कटार्योऽयमासभाद्वारमेवमागत्य तत्रान्दोलिकाया अवतीर्यापरित्यक्त किरीटचामरादिपरिबर्हस्सभामण्डपमासाद्य यतीन्द्रं चाभिवन्द्य तेनादिष्ट माम्रेडितं चित्रासनमास्थाय दिशो मुखरयन् मेघगम्भीर किमप्याभणति।

भो भो पण्डितपुङ्गवा निजनिज सारस्वतप्राभव
प्रख्याप्यात्र सभाङ्गणे प्रथयत प्रेक्षावतां सम्मतम् ।
श्री श्रीवासयतीश्वरोऽपि भवता सन्तुष्य वैदुष्यत
श्श्लाघाभिर्ननु बृंहयत्वतितरामस्या महाससदि ।। ३५

इदमेव हि जन्मन· फल न किलेदृक्समयो भवेद्ध्रुवम् ।
यशसां प्रसरैर्दिशो दशाप्यधुनैव ह्यपिदद्ध्वमुत्सुका· ।। ३६

**चित्ररथः -** अहो मधुरगम्भीरमांसलमाभणनम्।

**रत्नाङ्गदः -** सखे निशामय पण्डितमण्डली किमपि प्रतिवक्ति।

**पण्डितमण्डली -** भो भो तर्कालङ्कारवाचस्पते

को वा सम्प्रति सर्वतन्त्रविषयस्वातन्त्र्यमासेदुषो
स्सान्निध्ये भवतोस्समुच्छ्वसितुमप्यन्यः पुमान् शक्नुयात् ।
तस्मात्तत्रभवान् भवान् गुरुवरश्चोभौ जगद्भूषणा
वन्योन्यप्रथमानवादविभवैरामोदयेथां सभाम् ।। ३७

**चित्ररथः -** सत्यमुक्तं संख्यावद्भि । तथा हि

रहसा बृहमाणाना सिहानामग्रतः कथम्।
मतङ्गजघटाकण्ठात् घीङ्कारोदयसकथा ।। ३८

**मठश्रीकार्यकर्ता** - (पण्डितोक्तिमाकर्ण्य कामपि प्रणालीमालम्ब्य यतीन्द्रमुन्मुमोचयिषु )

यतीन्द्रवादवाञ्छाया पणबन्धप्रकल्पक. |
यदि कश्चित्पुमान् भूयात्तदा स्याद्वादसम्भव. || ३९

**रत्नाङ्गदः** - अहो स्वामिरक्षणगमनिकेय श्रीकार्यकर्तु परवादि बिभीषिका।

**वेङ्कटार्यः** - (स्वगत सक्रोधं सानन्द च) अहो वागार्भटी मठीयाना, अथवा मदीयमनोरथसवादिनीयं श्रीकार्यकर्तु प्रणालीकल्पना समुचितोऽयमवसरो मदीयाशयप्रकाशस्य (प्रकाशम्)

न्यञ्चेयं यद्यह वादे व्रजेयं मठशिष्यताम् |
उदञ्चेयं यदि तदा प्रब्रूतां संयमी पणम् || ४०

(सर्वे तूष्णका भवन्ति)

पुनरपि **वेङ्कटार्यः** - किमहो आकाशवाण्यपि नोत्तरतयावतरति। अथवा अहमेव भणामि। श्रुणुत।

यदि न्यञ्चेद्यतीन्द्रोऽय त्यक्तदण्डकमण्डलु |
इमां प्रदक्षिणीकुर्वन् पुरी ययाद्यथागतम् || ४१

**पण्डितमण्डली** - अहो कठोरता पणबन्धस्य।

**चित्ररथः** - स्तिमितीभूतेव सभा कस्यापि मुखान्न कापि निस्सरति वाणी।

**यतीन्द्रः** - (स्वगतम्) महाधीरो महाशूरोऽयं वेङ्कटार्य नास्मिन् प्रत्यवस्थानं युज्यते। तत्रापि च संप्रति क्रोधोद्दीपितमनाः एवंविधेऽस्मिन् नितरामेव च युज्यते प्रत्यवस्थानं, वादाहवश्च दुरपनोद इव दृश्यते। कथमिहानुष्ठेयं बन्दीकृतेव बुध्दि स्तिमितीभूतास्मिन् विषये।

**धर्माध्यक्षः**-(श्री कार्यकर्तु कर्णे किमपि कथयति। श्री कार्यकर्ता च यतीन्द्रस्य कर्णे)

**श्री कार्यकर्ता** - कतमस्मिन् शास्त्रेऽय पणबन्ध ।

**वेङ्कटार्यः** - सर्वेष्वपि शास्त्रेषु।

**यतीन्द्रः** - तर्हि वेदान्तशास्त्रे विशिष्टाद्वैतस्थापनमास्माको भाग । अद्वेतस्थापन च यौष्माको भाग इति व्यवस्थया भावत्कः पणबन्धोऽभ्युपगम्यतेऽस्माभि ।

**वेङ्कटार्यः** -(स्वगतम्)अहो यतीन्द्रस्य छद्ममार्गचातुरी यद्यद्वैतस्थापन स्वभागतयाभ्युपगच्छेयं तर्हि विशिष्टाद्वैतखण्डन बलाच्छिरस्यापतितम्। तथात्वे चाकार्यकरणदोष । आचार्यपरम्परया विसवादप्रवृत्तिरूपमहापराधप्रसक्ति । विशिष्टाद्वैतकिरीटधारणबिरुदस्य च विरोध॰। यदि च नाभ्युपगच्छेयं तदा जनेषु पराभवशङ्काकलङ्कभाजनभवनम् इत्युभयत पाशारज्जुर्व्यापारिता यतीन्द्रेण।

यद्येषोभ्युपगम्यते यतिपथ कष्टं गुरुद्रोहिता
किञ्चात्मीयकिरीटवर्णबिरुदव्याघातसम्पादनम् ।
नोचेदभ्युपगम्यते बुधजनावज्ञा भृशं दुस्सहा
हा! हन्तोपनताऽसकावुभयत॰ पाशाद्य रज्जुर्मम ॥ ४२

(पार्श्वस्थ भारद्वाजं मातुलेयशेषाचार्य दृष्ट्वा)

मातुलेय पथा केन सञ्चरेय महामते ।
स्थेयो भव मम श्रीमन् स्वस्थेयं स्यान्मतिर्मम ॥ ४३

**भारद्वाजश्शेषाचार्यः** - सुधीमणे विदितवेदितव्यस्य कि भवतोऽप्यनुशास्ता। न नापेक्षा। तथापि सुहृद्भावेन किञ्चित्स्मारयामि।

ईदृशी विषमा रीतिमुपकल्प्य कुशाग्रधीः।
वादाहवात्परिश्च्योतमभिप्रैति यतीश्वर ॥ ४४

अतिवाह्य च चातुर्यादिमं गण्डमुपस्थितम् ।
वादयिष्यति पश्चात्स्वदेशे विजयडिण्डिमम् ॥ ४५

तस्मात्कथकधौरेय कुर्वीथा वादिभञ्जनम् ।
पश्चाच्च निर्वहेस्सर्व स्वरूपानुगुण विधिम् ॥ ४६

**वेङ्कटार्यः**-(तद्वचनं सर्व परामृश्य सदसि साञ्जलिबन्धं ऊर्ध्वमवलोक्य)

हे श्रीमन्निगमान्तशास्त्र भवते बद्धोऽञ्जलिस्सादरं
क्षन्तव्योऽयमकामतो निपतितस्त्वद्विप्रलम्भोद्यम ।
पश्चात्तावकपादपङ्कजयुगी नीराजयिष्येतरा
कोटीराग्रचिरत्नरत्नपटलव्याजैः प्रदीपाङ्कुरै ॥ ४७

**पण्डितमण्डली**-(स्वगतम्) साधु कथकधौरेय साधु, सम्यगालोचयथा ।

**यतीन्द्रः** - (स्वगतम्) एतादृशविषमसंधावपि कृत्याकृत्यविषयविवेचन कूलङ्कषमनीषोऽय महाशय. मामकीन मानसमाप्याययति। परन्तु- अनेन कथकतुरासाहा सह मम वादकथा दुष्परिहरा संवृत्ता। कि करवाणि। (प्रकाशं सावष्टम्भम्)

जृम्भन्तां समराङ्गणे मम वचोगुम्भाः प्रियंभावुका
षट्तन्त्रच्छलयन्त्रपीठसततव्याघट्टनोत्तेजिताः ।
नानायुक्तिकरम्भिता गुरुकृपावीक्षारसोत्तम्भिताः
दर्पोदग्रवदावदोत्कटमतावष्टम्भमुष्टिन्धयाः ॥ ४८

(मठीयास्समहोत्साह परस्परहस्तप्रदानमाकलयन्ति)

**वेङ्कटार्यः** - (सस्मितम्) साधु यतिपुरदर साधु। सम्यगुपन्यास्थः।

परन्तु वाचोपन्यस्त क्रियया सम्पाद्य सभाया सशोभेथा ।

**यतीन्द्रः** - भविष्यति मिथोवादे जयो वाऽथ पराजय ।

वीरवादा कथ न स्युरात्मसरम्भहेतुका. ॥ ४९

**पण्डितमण्डली** - (सगौरव यतीन्द्रोक्तिमभिनन्दति)

पुनरपि **यतीन्द्रः** - अथवा

अद्वेतस्य कथामद्य व्युच्छिनद्मि जगत्त्रये ।

भिनद्मि द्विषता गर्व क्षुणद्मि श्रुतिवैशसम् ॥ ५०

इत्युक्त्वा छान्दोग्ये श्वेतकेतवे आरुणिना उपदिष्टं सद्विद्यास्थं "सदेव सोम्येदमग्र आसी" दिति विषयवाक्यमुल्लिख्य तत्रस्थं शाङ्करमतमनूद्य तदुपरि

श्रीमद्भाष्यप्रभृतिकथितानर्घयुक्तीस्सहस्र
व्यक्तीकुर्वन् निजधिषणयाप्युल्लिखन् नव्ययुक्ती· ।
अद्वैतार्थ सदसि बहुश· खण्डयामास धीर
प्रेक्षावत्सु प्रमदभरतो मौलिमान्दोलयत्सु ॥ ५१

अहो चण्डवेगता यतीन्द्रस्य। (मठीयास्सर्वेऽपि सभासदश्चित्रार्पिता इव सहर्ष यतीन्द्रं पश्यन्ति)

**रत्नाङ्गदः** - सखे चित्ररथ पश्य पश्य वादाहवस्य महाश्चर्यरूपताम्। ततश्चायमपि वेङ्कटार्यः।

श्रुत्वा सर्व यतिपतिमुखोद्गीर्णमुक्तिप्रपञ्चं
स्मित्वा किञ्चित्सकलसदसि स्वोन्मुखायां वसन्त्याम् ।
वर्षन् हर्षाच्छतगुणमसौ युक्तिवर्ष तरस्वी
योगीन्द्रोक्तीस्सदसि तिलशोऽखण्डयच्चण्डदीप्ति. ॥ ५२

अहो पाण्डित्यचण्डिमा वेङ्कटार्यस्य (सर्वेपि सभासदस्साधुवादवर्षेण वेङ्कटार्यमभिनन्दन्ति) ततश्च

भूयश्श्रीमास्तदुपरि यतिश्चालयामास कक्ष्या
स्ता अप्येष प्रसभमलुनाल्लीलया वेङ्कटार्य. ।
एवं धून्वन्नसकृदसकृत्सयमीन्द्रस्य युक्ती
रन्ते तस्मिन् शरशशिमितास्स्थापयामास कक्ष्या ॥ ५३

**रत्नाङ्गद चित्ररथौ -**

उभावपि दुराधर्षौ व्याघ्राविव महाद्युती ।
तत्रापि वेङ्कटार्योऽयमद्भुतप्रतिभाबल· ॥ ५४

(नेपथ्ये वैतालिक·)

पाश्चात्याचलसन्निकृष्टविहति पङ्केरुहाणा पति
स्सामत्वेन विवर्तयन् वलयते स्वीयान् मयूखोत्करान् ।
छायाश्चापि महीरुहां बहुतर दीर्घायिता· प्राग्दिशं
धावन्ते तिमिरावलीस्समरुचीराह्वा तु कामा इव ॥ ५५

Here six pages are left blank -Editor

# तृतीयोऽङ्कः

(तत प्रविशति विमानारूढ मदनमञ्जरी चित्राङ्गदश्चेति गन्धर्वमिथुनम्)

**चित्राङ्गदः -** प्रिये अवतरावस्तावद्विमानात् सप्राप्तौ स्व अधिगन्तव्य-स्थानम्।

**मदनमञ्जरी-** कि सम्पत्ता सुरपुरणअरी जध्द ओतरणिज्जं अम्हेहि (कि सप्राप्ता सुरपुरनगरी यत्रावतरणीयमावाभ्याम्।)

**चित्राङ्गदः -** न केवल सुरपुरनगरी किन्तु भवदौत्सुक्यस्थानं सिध्दवन नाम तत्प्रान्तवर्ति उद्यानमपि।

**मदनमञ्जरी -** (साश्चर्यम्) केरिसोअअ (इमो) विमाणवेओ ज एक्कखणावच्चेएणेव्व विमाणारोहणि ओतरणच समुवणअ(कीदृशोऽय विमानवेगः यदेकक्षणावच्छेदेनैव विमानारोहणमवतरण च समुपनतम्) (इत्यवतीर्णौ उद्यानवीथी प्रविश्य समन्ततो दृष्टि प्रसार्य सानन्दम्) पिअवअस्स पेख्खताव उज्जाणस्स रमणिज्जत्तणं (प्रियवयस्य पश्य तावदुद्यानस्य रमणीयत्वम्।)

आवंतप्पडिपुल्ल हल्लअ वणी खेलंत भिगंगणा
झंकारामअ सेअ सित्त सवणा मारद कोल्लाव आ ।
साहालंबिअ मोरजाल बरिहत्थोमेहि चित्तीक आ
हंसक्कोचरव चिआ कुण इमे उज्जाण पज्जा मुअं ॥ १

(आवृन्तप्रतिफुल्लहल्लकवनी खेलन्ति भृङ्गाङ्गना
झङ्कारामृतसेकसिक्तश्रवणा मारन्दकुल्यावृता ।
शाखालम्बिमयूरजाल बर्हस्तोमचित्रीकृता
हंसक्रौञ्चरवाञ्चिता कुरुत मे उद्यानपद्या मुदम् ॥)

**चित्राङ्गदः** - अभिनवविविधविलासबन्धुर त्वदीय यौवनमिव वनमिद मुत्कण्ठयति मदीयमन्तरात्मानम्।

**मदनमञ्जरी** - (सरोषमिव तिर्यग्दृशा तं प्रेक्षते)

**चित्राङ्गदः** - कुत प्रेयसि रोषस्ते विश तावद्वनोदरम्।
विनोदरसमासिञ्च जनेऽस्मिन् सकुतूहले ॥ २

**मदनमञ्जरी** - (सप्रणयोल्लासम्) अज्ज उत्त इदो पेक्ख (आर्यपुत्र इत प्रेक्षस्व।)

आकिण्णा रअणुक्करेहि विअ संसप्पत कीरगणा
चंचूपाडिअ पिक्कदाडिमफल व्वाइण्ण बीजक्करा।
चंपेय प्पसवप्पलीवकलिआ रम्माणिउजोलिआ
उक्कठाकुलिया मण वितणिए केलीघर पथिणी ॥ ३

(आकीर्णा रत्नोत्करैरिव संसर्पन्ति कीराङ्गना
चञ्चूपाटितपक्वदाडिमिफलव्याकीर्णबीजोत्करा।
चाम्पेयप्रसवप्रदीपकलिकारम्या निकुञ्जावलि
उत्कण्ठाकुलितं मनो वितनुते केलीगृहस्पर्धिनी ।)

इतोअ पेक्ख (इतश्च प्रेक्षस्व)

पच्चग्गारुण चूदपल्लवरसा साउम्मआ कोइला
कठोदंचिअ चारुपंचमरव प्पक्कंत कर्णोत्सवा।
छाही सूहव संदकुंज भवण क्कीडंत मुध्दंगणा
गंडालेप हलद्दिया परिमळा किण्णाअ रम्मावणी ॥ ४

(प्रत्यग्रारुणचूतपल्लवरसास्वादोन्मदा कोकिला
कण्ठोदञ्चितचारुपञ्चमरवप्रक्रान्तकर्णोत्सवा।

छायासौभगसान्द्रकुञ्जभवने क्रीडन्ति मुग्धाङ्गना
गण्डालेपहरिद्रता परिमलाकीर्णा च रम्या वनी ।।)

अज्ज उत्त एध्दखु सिध्दवणमि मज्झट्ठिअ सुहव सर रअण महुर मासल तुसार सलिल धारा सेअ परिवड्ढिएसु निबिड समुब्भूअ किसल पलास कुपलं गुच्छ सपअ समंचिअ वेल्लीसहास परिवेल्लन सदिएसु विविहविइत्तभवण सण्णिवेस सोहीसु पच्चग्गप्पफुल्ल पोप्भसोरह मअरद सुहिअ मिळिदकुल झकार मिवअ वम्मह धणुह टकार झुणि करबिएसु बाहिर मणुअ दुद्दस्सत्तर अण पउटिविसेसेसु पच्छाअ शीअलेसु निगूढअरेसु णिउज पुंजेसु सोहादस्सण कोउहल्लेण पविसतीओ मुध्दंगणाओ छम्मेण पुढुमं एव्व पविज्झेहि णिअणिअ वल्लहेहि बलाओ अंतराकसिअ पल्लव सेज्जासु पणिवेसिता रहम्मि सच्छंदं कुआ जहणाहर कपोलाइ त्थळ विसेस णिअएहि सुरअव्वा वार विसेसेहि निअंतं संतप्पिआओ तदो निकुज सअनेसुंतो बाहि णिग्गमिउं अणिच्छती ओवि गुरुअण तासंतो बलाओ णिअ (णिअ) घराहिमुहं पसप्पंति पेक्ख पेक्ख.

(आर्यपुत्र अत्र खलु सिध्दवने मध्यस्थितसुभगसरोरत्नमधुरमांसल तुषारसलिलधारासेकपरिवर्धितेषु निबिडसमुद्भूतकिसलयपलाशकुट्मल गुच्छसम्पत्समञ्चितवल्लीसहस्रपरिवेल्लनसान्द्रितेषु विविधविचित्रभवन सन्निवेशशोभिषु प्रत्यग्रप्रफुल्लपुष्पसौरभमकरन्दसुहितमिलिन्दकुलझंकार मयमन्मथधनुष्टङ्कारध्वनिकरम्बितेषु बहिर्मनुजदुर्दर्शान्तरजनप्रवृत्तिविशेषेषु प्रच्छायशीतलेषु निगूढतरेषु निकुञ्जपुञ्जेषु शोभादर्शनकुतूहलेन प्रविशन्त्यो मुग्धाङ्गनाश्छद्मना प्रथममेव प्रविष्टैर्निजनिजवल्लभैर्बलादन्तराकृष्य पल्लव शय्यासु प्रणिवेशिताः रहसि स्वच्छन्दं कुचजघनाधर कपोलादि

स्थलविशेषनियतैस्सुरतव्यापारविशेषै· नितान्त सन्तर्पिताः ततो निकुञ्ज भवनेभ्यो बहिर्गन्तुमनिच्छन्त्योपि गुरुजनत्रासेन बलान्निज निजगृहाभिमुखं प्रसर्पन्ति प्रेक्षस्व प्रेक्षस्व।

**चित्राङ्गदः** - (सोल्लासम्) एभि कुञ्जसदनैरावामेव केवल परिवञ्चितौ।

**मदनमञ्जरी** - (सप्रणयकोप सभ्रूभङ्गं अपाङ्गेन त प्रेक्षते) (अनुपदमेव सानुस्मरणम्) अज्ज उत्त उज्जाण सोहा हिअ हिअआ विसुमरीआ अहं इअचिर आअमणुद्देस। जइद वेगडा आरिआणि वाआहवो कध पउट्टइ कइआ पउट्टइत्ति विआरिज्जउ। जस्सओलोअणा अवअ एध आआ।। (आर्यपुत्र उद्यानशोभाहृतहृदयोव्यस्मार्षमहमियच्चिर आगमनोद्देश्य। यतीन्द्रवेङ्कटार्ययोर्वादाहवः कुत्र प्रवर्तते कदा प्रवर्तत इति विचार्यतां यस्यावलोकनाय आवामत्रागतौ।)

**चित्राङ्गदः** - (सुरपुरगमनं नाटयित्वा पुन प्रविश्य) प्रिये मदनमञ्जरि तवोत्कण्ठकन्दलो निष्फलो जातः यस्मादुभयोस्सन्धिस्संवृत्त इति सर्वे पौरा कथयन्ति।

**मदनमञ्जरी** - अच्छरिअ मच्छरिअं तहाविह कढोरपणबंध पुव्वअं वाआवहम्मि पउट्ठाणं कहण्णाम संधी संवत्तो। तं सधि विह वा ओवण्णेसु तावमेत्तेण विवा संतूसामि। किं कुशेमि वाआहव दस्सण भग्गहीणा। (आश्चर्यमाश्चर्चम्। तथाविधकठोरपणबन्धपूर्वकं वादाहवे प्रवृत्तयो· कथं नाम सन्धिस्संवृत्तः। तां सन्धिविधां वा उपवर्णय तावन्मात्रेणापि वा सन्तुष्यामि कि करोमि वादाहवदर्शनभाग्यहीना।)

**चित्राङ्गदः** - भगवदाज्ञया।

**मदनमञ्जरी** - णाहं वीससिमि कहं णाम भअवंतो आणावेहि। मांस चक्खूणि अगोअरो।

(नाह विश्वसिमि। कथं नाम भगवानाज्ञापयति साक्षात् मांस चक्षुषामगोचर ।)

**चित्राङ्गदः** - शृणु तावदापादचूडमुपपादयामि। यतीन्द्र वेङ्कटाचार्ययोर्यत्सवृत्त वादाहवस्य वृत्तं। तत्र प्रथमदिनवृत्तं तावद्भवत्या श्रुतमेव मदीयमुखात्।

द्वैतीयीकदिनेऽपि पूर्वदिनवद्यामत्रयीकालिक·
प्राचालीदुभयोस्तयोरतितरा वादाहवो दारुणः ।
अन्योन्योदितयुक्तिशस्त्रदलितान्योन्योक्तियुक्तिच्छटे
नान्ते चैव यतीन्द्रपक्षविभवन्यक्कारि युक्त्याऽविलः ।। ५

**मदनमञ्जरी** - बी अस्सिवि दिअहम्मि जइंद पक्खधिक्कारपिव जाअ ओत्ति दयए मे हिअअं (द्वितीयस्मिन्नपि दिवसे यतीन्द्रपक्षधिक्कार एव जात इत्यत्र दूयते मे हृदयम्।)

**चित्राङ्गदः** - ज्ञानतारतम्यहेतुकयोर्जयपराजययो· का नाम व्यथा, किञ्च न केवलं दिनद्वय एव यतीन्द्रपक्षन्यक्कारः किन्तु

प्रत्यह सदसि पञ्चदशाध्यारोपयन् शमधनोपरि कोटीः ।
स्वीयधाम स जगाम यशस्वी वेङ्कटार्य उपलब्धजयश्रीः।। ६

एवं चतुर्दश दिनानि समग्रजाग्र
द्युक्तिच्छटाजटिलवादमृथे विधूतः ।
कर्तव्ययत्नविधुरः पृथुरोषजुष्टः
लक्ष्मीनृसिंहमथ रोषयतिस्म योगी ।। ७

तथाहि

हे लक्ष्मीनरसिह तावककृपापाङ्गच्छटासम्प्लवा
त्सम्प्राप्ताभ्युदयस्तवैव विभव संवर्धयन् सर्वत· ।
वर्ते सन्ततमीदृशस्य मम भोस्तेजोऽधुना सक्षिपन्
क वा लाभमुपैषि काञ्च लभसे कीर्तिं न जानाम्यहम् ।। ८

ईदृङ्महाद्युति सहस्रसुधीसमाजे
मा स्तम्भयन्तमितराश्च विजृम्भयन्तम् ।
सत्यं ह्यरण्यमृग इत्यखिलोऽपि लोक
स्त्वां संत्यजेन्नरहरे हृदयेऽवधे हि ।। ९

त्वं दैवत मम नृसिह सदैव सेव्यं
देवस्तथा हयमुख प्रतिवादिसेव्य. ।
सिह कथं ननु हयादवहीयसे त्वं
स्तम्भोद्भवस्य यदि वा न हि चोद्यमेतत् ।। १०

इत्थं रुषा सुपरुषं समुदीर्य तस्यां
रात्र्यामसौ मरिचमिश्रितसर्षपौघम् ।
सक्षुद्य तं च विनिवेद्य पुरोऽस्य शिश्ये
प्रायोपवेशविधया प्रवरो यतीनाम् ।। ११

**मदनमञ्जरी -** अहो जईणंवि राअद्देस भूइट्ठआ ज सअं सत्ति विहुरो णरसीह तेअ संदुक्षणेण वेङ्कडज्ज पराहावेउं पउट्जो संजमी। (अहो यतीनामपि रागद्वेषभूयिष्ठता। यत्स्वयंशक्तिविधुरो नरसिहतेजस्संधुक्षणेन वेङ्कटार्य पराभवयितुं प्रवृत्तस्संयमी।)

**चित्राङ्गदः -** आशामोदकोऽय कर्मन्दिनः। येन यथा भवितव्यं तत्तथैव भविष्यति। एवं स्थिते चपलचित्तैस्स्वीयहृदयदौर्बल्यं तावत्प्रदर्श्यते मनुष्यैः।

**मदनमञ्जरी** - सञ्च एद। णखु मणरहो सव्वो सफलो हुविस्सइ लोए। (सत्यमेतत्। नखलु मनोरथ स्सर्व स्सफलो भविष्यति लोके।)

होउ पाओववेसस्स केरिसो परिणामो कहेसु तं

(भवतु प्रायोपवेशस्य कीदृशः परिणाम कथयस्व तम्)

**चित्राङ्गदः** - तस्या निशाया यतीन्द्रस्य स्वप्ने

निजाङ्गज्योत्स्नाभिस्त्रिजगति तमोऽन्धं विघटयन्
किरन् विद्युत्पुञ्जान् दिशिदिशि पुरन्ध्रीसुषमया ।
सनीडारूढस्सन् यतिवरमभाणीत्स्मितमुखो
हयास्यो योगीन्द्रं सविनयनिबध्दाञ्जलिपुटम् ।। १२

भो भो यतीन्द्र हृदि मा स्म कृथा वृथा त्वं
वादाहवेऽद्य कुतुकं कथकाग्रगेण ।
मद्वीक्षणामृतरसैरभिषिक्त एष
दुर्निग्रहस्त्रिजगताऽपि हि वेङ्कटार्यः ।। १३

तस्मादनेन सह वादरुचि विहाय
स्नेहं कुरुष्व बिरुदानुपघुष्य तस्य ।
विद्ध्येवमेव नृहरेरपि भावबन्ध
मित्याभणन् यमिनमन्तरधाद्धयास्य. ।। १४

**मदनमञ्जरी** - सञ्चं जइदस्स विअआशा आसामोअअ सरिच्छी संवुत्ता होउ तावइमं वेकडञ्जस्स पउत्ती केरिसी।

(सत्यं यतीन्द्रस्य विजयाशा आशामोदकसदृशी संवृत्ता।भवतु तावदिदं वेङ्कटार्यस्य प्रवृत्ति· कीदृशी।)

**चित्राङ्गदः** - अनुदिनजयप्रयोज्यप्राज्यसुधीसूक्तिपूज्यमानोऽपि ।
स्वकृतविशिष्टाद्वैतव्याधूननदुर्मनाश्चिराच्छिष्ये ।। १५

तस्यापि स्वप्ने

दष्ट्राङ्कूरमरीचिभिश्शकलयन् हार्दान्धकारच्छटा
माकर्णान्तविदीर्णवक्त्रविगलज्झिह्वातटित्सुन्दर· ।
स्कन्धालम्बिसटाच्छट  कमलयाश्लिष्टो महीध्रोपम
प्रत्यक्षत्वमवाप्य दिव्यमृगराड्वाणीमभाणीदिमाम् ।।  १६

भो वेङ्कटार्य किमिदं विदधासि कृत्यं
वेदान्तहृद्वितथनं न हि साम्प्रत ते ।
मोक्षाश्रमप्रवणपूरुषधिक्कृतिश्च
न श्रेयसा पदमतो विरमस्व वादात् ।।  १७

नाहं पृथग्घयमुखात् त्वदुपास्यदैवात्
तस्मादिमां मम गिरं दृढमाद्रियेथा ।
श्रेयो भवेत्तव वदावदसार्वभौमे
त्यादिश्य सादरमदृश्यतनुर्बभूव ।।  १८

**मदनमञ्जरी** - अहो तेल्लोक्क गणणिज्जो इमो वाआहओ ज देव्व देव्वेहिं णरसीह हअग्गीवेहि सअं संति उअणिणीसिओ। होउताव सिअवआंस ममएह काअण संकासमंकुरइ। इमा णरसीह हअवअणाओ कमेण णिओवासआणं जइंद वेकटज्ञाण सिमिणअम्मि कमाओ अनागमिअ कम्हाओ वुक्कमेण पच्चक्खत्तण ओगआ.

(अहो त्रैलोक्यगणनीयोऽयं वादाहवो यद्देवदेवाभ्यां नरसिंहहयग्रीवाभ्यां स्वय  शान्तिमुपनिनीषितः। भवतु तावत्प्रियवतंस ममात्र काचन शङ्का समङ्कुरति। इमौ नरसिंहहयवदनौ क्रमेण निजोपासकयोर्यतीन्द्र वेङ्कटार्ययोस्स्वप्ने क्रमेणानागत्य कस्माद्व्युत्क्रमेण प्रत्यक्षता आगतौ।)

**चित्राङ्गदः** - तावेव देवौ प्रष्टव्यौ। अह त्वेवं मन्ये। स्वस्वोपासकयो-

र्मनोरथप्रत्याख्यान कर्तुं स्वयमनिच्छन्तौ इत्थं व्युत्क्रमेण प्रत्यक्षी भूताविति। अन्योन्ययोस्तयोरन्योन्य स्वस्मिन् भक्तिमुद्रेचयितुं वेति।

**मदनमञ्जरी** - कि तरिहि वाअ चरमावहि रूवे पण्णरहे दिअहव्वि वाआहवस्स वीसामो एव्व संवुत्तो दीहराऊओ तावजइदस्स दडकमडलूओ

(कि तर्हि वादचरमावधिभूते रूपे पञ्चदशे दिवसे वादाहवस्य विश्राम एव सवृत्तः। दीर्घायुषौ तावद्यतीन्द्रस्य दण्डकमण्डलू।)

**चित्राङ्गदः** - श्रुणु तावद्यत्संवृत्तं पञ्चदशे दिवसे

एवं तावरुणोदये परिणतस्वप्नौ ततो व्युत्थितौ
विज्ञायापि तदर्थमाश्रुतपथे बध्दादरौ साङ्कुशौ ।
सुस्नातौ रचिताह्निकौ स्वसमये वादाहवायोद्यतौ
सम्प्राप्तौ विबुधर्षभैर्निबिडित श्रीमत्सभामण्डपम् ।। १९

तस्मिन् वासरे

लक्ष्मीनृसिहमभिराध्य समग्रभक्त्या
नीराजनान्तमनर्घैर्विविधोपचारैः ।
तस्याग्रतस्सदसि वादरण विधातु
मारब्धवान् स्वपनभीषितधीर्यतीन्द्रः।।२०

तदानीं हि

बृन्दं बृन्दमुपागतास्सकुतुकं को वा जयश्रीवृत
स्स्यादस्मिन्नहनीत्यवेतुमनसः पौरास्सहस्रोत्तराः ।
तत्राच्छाद्य सभास्थलीमुभयतः पश्चात्पुरस्तादुप
र्यन्तश्चन्यविशन्त हन्त सिकतापातावकाशाप्रदाः ।। २१

वेङ्कटार्यः - (स्वगतम्)

हे हयग्रीव दुर्धर्षयुक्तिवर्षसमुध्दतैः ।
हेषितैर्भीषयन् शत्रून् विहरस्व मुखे मम ॥ २२

ततश्च

आरब्धस्समभूदभूतविषय प्रोद्दामकोलाहल
श्शास्त्राशस्त्रिरणार्भटीपरिगतो वादाहवः प्रोद्भटः ।
तस्मिन्नभ्यधिको बभूव दिवसे श्रीवेङ्कटार्यस्सुधीः
पश्यत्सुप्रमदात्सुधीषु सहसा प्रग्वासरप्रक्रमात् ॥ २३

तस्मिन्नवसरे चामरहस्तो दक्षिणपार्श्ववर्ती हनुमद्गुण्डाभिजन (हनुम कोडा) पिचण्डिलश्शेषाचर्य वेङ्कटाचार्यमित्थमभ्यधत्त।

भो भोः पैतृष्वस्त्रीय

हन्त निशामय किञ्चन्नृसिहदेवो महोग्रतररूपः।
उपरि पतन्निव कोपाञ्चलति व्याघूर्णते च मम दृष्ट्योः॥ २४

तद्वचनमाकर्ण्य वेङ्कटार्योपि सनीडशोभिनि डोलाधिरूढे भगवति नृसिहे दृशं प्रसादयति। अथ च

तस्याक्ष्णोरपि ददृशे तथैव देवःस्वज्ञातिक्रमणवशाद्रुषाधिरूढः।
विष्फूर्जन्निव चलतीव गर्जतीव प्रोत्सर्पन्नुपरि पतिष्यतीव साक्षात्॥२५

किञ्च

नृसिंहेण समारूढा डोलाप्याश्चर्यवर्षिणी ।
आन्दोलिकेव केनापि प्रास्पन्दत पदे पदे ॥ २६

(सभासदस्सर्वैरपि किमेतदिति साश्चर्य डोलामालोकन्ते। ततो वेङ्कटार्य स्ससंभ्रममुत्थाय बध्दाञ्जलिपुटस्सभक्तिप्रकर्ष भगवन्तं नरसिंहं इत्थ मस्तावीत्।)

१ वरद वरदन्तिहृदातपहृच्छरद शरदम्बुजनेत्रयुगम् ।
दरदिव्यरथाङ्गधर मधुर मधुराकृतधाम मह कलये।। २७

२ कमला कमलायतलोचनवत्यमला यमलासयतानुगुणा ।
शमलालसमौनिमलापहमागमलालितमेन मह कलये ।। २८

३ उदधावुदधारि जरत्फणितिर्विबुधारिकथामवधीरयता ।
विदधेऽपि च येन विधातृमुखे विदधातु शमेष तिमीशपुमान्।।२९

४ वरकन्दरमन्दरमन्थनत कलशोदधिशोधयिता दयिताम् ।
शयतामरसान्वयिनी जयिनीमयिता दयतामबट कमठः।। ३०

५. नवनीलवनीकलितां ललितामवनीमुपनीय शनैर्दशने ।
शशिनीव कलङ्ककला कलयन् किटिरूपधरोऽपहरेद्दुरितम्।।३१

६ तरसा तरसाशनमुद्दलयन् उरसा शरसारखरैर्नखरै ।
सुरसन् सुरसन्नुतनैजकृतिर्नरसिहहरिर्दुरितं हरतु ।। ३२

७. अतिदारुणदानवदेहकमध्वनि दारुणि रूपमुपेत्य वरम् ।
विददारमुदार भटीभिरसौ नरसिहहरिर्मुहुरस्तु मुदे ।। ३३

८ बलिमत्र पदत्रितयाय रयादुपयाय यदूनपद तदिदम् ।
हरिरस्य शिरस्युपनीय जयन् अयमस्तु मुदे मम वामनकः।।३४

९. परशावरिशासनभासिनि सत्करशालिनि शान्तरसानुगुण. ।
सुरसां सुरसासुरसात्कृतवान् स रसां जमदग्निजनिर्जयतात्।।३५

१० परशुं परशुग्रचनानुगुण करशुम्भितमाकलयन् दलयन् ।
प्रतिराजकमाजिकथासु तथा प्रमदं जमदग्निजनुस्तनुताम् ।।३६

११. इनवशनवाम्बुधिचन्द्रमसं शमसङ्गिजनात्मनि संतमसम् ।
शमयन्तमिमं तनवानि हृदा प्रमदाय सदा मम दाशरथिम् ।।३७

१२. हलमुज्ज्वलमुत्कलयन् दलयन् अरिवारमवारितशौर्यभरः।
शुभराजिमराजयथा नियत बलभद्र लभस्व मदीयनती ।।३८

१३ मुरलीमुरुलीढनुषिप्रसरत्स्वरलीनमनीषिमनश्श्रवणाम् ।
करपङ्करुहे कलयन्तममु मुरवैरिणमेष नमस्करवै।। ३९

१४ धुरि दुष्करकृत्यतुरुष्करणाजिरशुष्करमाङ्गपरिष्करणीम् ।
करवाललतां कलयन्तमिमं हृदि कल्किनमर्कनिभं बिभ्रुम् ।।४०

१५. इति निर्मलतिर्मलबुक्कपुरीकुलभर्मलताग्रसुमस्तबकः।
स्तवकल्पक एष पुरस्तव रे नृहरेऽस्तु स वेङ्कटवर्यसुधी ।४१

१६ इदमस्तनमन्ततिशस्ततमं परमस्तवनं भुवि नः कवनम् ।
हृदि ये कलयेयुरमेयरमेक्षणलक्षणसम्पदमेयुरिमे ।।४२ इति।

(एवं "भाव भावय फणिशयन"मित्युत्सवसमयपठनीया गाथामपि निरमिमीत)

**सभासदः** - साधु भो. पण्डितकविमूर्धन्य साधु। पाण्डित्यमिव तव कविताऽपि लोकाश्चर्यकरी। (इति प्रशंसन्ति)

**यतीन्द्रः** - पाण्डित्यमद्भुतमपारमगाधमस्य
गङ्गाप्रवाहसदृशी कविताप्यमोघा ।
श्मश्रूद्गमाकलितकान्तिवयश्च नव्यं
नो कस्य विस्मयकराणि महात्मनोऽस्य ।। ४३

**चित्राङ्गदः**- इत्थं स्तुत्वा तोषयित्वा नृसिहं
हृष्टः श्रीमान् वेङ्कटार्यो मनस्वी ।
स्मित्वाऽवोचत्संयमीन्द्र सभायां
कैषाऽपूर्वप्रक्रिया ते यतीन्दो ।। ४४

**वेङ्कटार्यः** - आवयो कलहे तावदावाभ्यामेव सुत्यजे
लक्ष्मीनृसिहपर्यन्तमनुधावितवान् कुत ।

**चित्राङ्गदः** - इत्थं यतीन्द्रवाचा प्रचोदित कौतुकान्त्रितसत्
भावशतकाभिधानं प्रबन्धरत्न बबन्ध स कवीन्दु ।।४५

**यतीन्द्रः** - (सस्मितम्)

अत्यद्भुताप्रतिमतेजसि पण्डिताग्र्ये
त्वय्यास्थिते जगति न परिपन्थिभावम् ।
कास्कान् विधीन्नहि भजेमहि हे महौजः
नास्माकमीषदपि दोषमिह ब्रवीथा ।। ४६

(इत्युक्त्वा सोल्लासम्) भोभो मठाधिकारिण

आनीयन्तां कण्ठिकाश्चद्रहारा·
मुक्तावल्यो राङ्कवाण्यप्यभीक्ष्णम् ।
सम्मान्योऽयं वेङ्कटार्यो मनस्वी
श्रीमान् धीमान् भूरितेजा महौजा ।। ४७

(इत्यादिश्य तैस्तत्क्षणसमानीतैः कण्ठिकाचन्द्रहारादिभि वेङ्कटार्य सम्मान्य) भो भो लोकोत्तर वैदुष्यपरिष्कृत वेङ्कटार्यमहाशय ! त्वयि

सर्वतन्त्रस्वतन्त्रत्वं कवितार्किकसिहताम् ।
लक्ष्मीनृसिहस्संपश्यन् ददाति बिरुदाविमौ ।। ४८

(इति परिमलघुमंघुमितसभांगण प्रफुल्लहल्लकमल्लिकागुच्छगुम्भितं माल्य द्वय अधिकण्ठं विनिक्षिपन् विजयडिण्डिमध्वानपूर्वकं 'सर्वतन्त्र स्वतन्त्र' कवितार्किकसिह बिरुदौ ददाति)

**वेङ्कटार्यः**- लक्ष्मीनृसिहयतीन्द्रयोरनुग्रहेण द्विगुणसमुपबृंहिततेजोनिधि रस्मि महद्भाग्यमिदममुष्य जनस्य।

(इति भणित्वा सभास्तरानवलोक्य)

भो भो कौतस्कुतेन्द्राश्शृणुत यतिपतेश्शक्तिरत्यद्भुतैषा
योऽरक्षल्लक्ष्मणार्यप्रकटितपदवी प्रौढवादाहवेऽस्मिन् ।
तस्मादुद्दामनैजद्युतिरयमयतां साधुरामानुजार्य
श्रीमत्सिद्धान्तनिर्धारणघनसरणौ सार्वभौमत्वकीर्तिम् ।। ४९

(इत्युपन्यस्य श्रीचिह्नध्वानगर्भिताभिर्भेरीभाकृतिभिस्साकं श्रीमद्रामानुज सिद्धान्तनिर्धारणसार्वभौमबिरुदेन यतीन्द्रं बहूकरोति। सभाजयति।)

**सभासदः**- वेङ्कटार्य सत्यमय रामानुजसिद्धान्तनिर्धारणसार्वभौमः।
(इति तद्बहूकरणमुपबृंहयन्ति)

**यतीन्द्रः** - (अन्तस्संतुष्यन्)

अहो मयि दयापूरो हयग्रीवस्य कीदृश ।
व्यपोह्य विपदाशङ्का व्यस्तृणोन्मुदमीदृशीम् ।। ५०

यावद्भीषणतास्पदं प्रथमतो वादाहवप्रोत्थित
तावद्रञ्जनसंभृत· परिणतः प्रेक्षावदानन्दन. ।
सन्धौ पश्य कियद्गुणा कति च वा द्वेषे च दोषास्ततः
स्तोतव्यो भगवानहो हयमुख कारुण्यवारान्निधि ।। ५१

(प्रकाशम्) भो वेङ्कटार्य

नित्यं कर्कशतर्कशास्त्रगहने वादाहवे दारुणे
क्लान्तं स्वान्तमिदं मदीयमधुना तच्छ्रान्तिशान्त्यै तव ।
अम्भोजालिगलन्मधूलिमधुरं पद्यात्मकं वाङ्मयं
श्रोतुं वाञ्छति काङ्क्षितं सफलयेस्संख्यावतामग्रणी· ।। ५२

इत्थ यतीन्द्रवाचा प्रचोदित कौतुकान्वितस्सद्य ।
भावशतकाभिधान प्रबन्धरत्न बबन्ध स कवीन्दु ॥ ५३

यत्र हि प्रथममिमे श्लोका उपनिबद्धा ।

लक्ष्मीनृसिहकरुणारसलब्धसर्व
तन्त्रस्वतन्त्र कवितार्किकसिहलक्ष्मा ।
श्रीशैलबुक्कनगरान्वयवेङ्कटार्य
श्रीकृष्णसस्मरणमातनुते मिषेण ॥ ५४

साहितीसौहितीराहितीमोहिता
ये हि ते नेह तात्पर्यमातन्वते ।
नाटकालङ्क्रियामण्डिता पण्डिता
भावनाजीवनाभावमाचिन्वते ॥ ५५

परिसरसरत्तुङ्गत्वङ्गत्तरङ्गपरम्परा
मलसवलितापाङ्गैरालोक्य निर्दिशती सती।
धुरि मधुरिपोर्जालं व्यालम्ब्य तत्र मुहुर्मुहु
स्सरभसरसोत्कर्ष कर्षन्तमन्यमुपाहसत्।। ५६

(इत्यादिकस्संपूर्णग्रन्थस्सर्वत्र दृश्यते)

(तादृशभावशतकसमाकर्णनेन प्रहर्षरसपरवशा सर्वापि सा सभा साधुवादवर्षेण वेङ्कटार्यमभिवर्षति। यतीन्द्रोपि हृदि विस्मयते।)

(अत्रान्तरे)

**अद्वैतिनः** -भो भोः पण्डितबृन्दचण्डकिरण त्वच्छेमुषीवैदुषी
विस्फूर्त्योर्मणिदर्पणीस्त्रिभुवनव्यापी यशोडिण्डिमः ।
एतद्वादरणार्भटीप्रकटिनी त्वद्दिव्ययुक्तिच्छटा
स्थेयाच्छङ्करभाष्यभूषणतया गोष्ठीमधिष्ठाय न. ॥ ५७

(इत्यभ्यर्थयन्ते)

**वेङ्कटार्यः** - (सस्मित ओमित्यङ्गीकरोति भागवता यतीन्द्रश्च सशङ्कं परस्परं मुखान्यवलोकन्ते)

**वेङ्कटार्यः** - (सदसि साञ्जलिबन्धम्)

आचार्या कृपया क्षमध्वमवशारब्धागस ह्रीजुषं
सर्वज्ञा न कथ हि वित्त हृदयं दासस्य योऽसावहम् ।
कोटीरीकृतवान् मतं हि भवतां तस्मादिदानींतनी
मद्वैतानुगगाढयुक्तिपटलीमुद्धूनये पश्यत ।। ५८

इत्युदीर्य विजिगीषु कथाया स्वेन ससदि समीरितयुक्ती ।
व्यच्छिनत्स शतधा कथकेन्दुर्विस्मयेन विनुवत्सु सुधीषु।। ५९

**सभासदः** - सर्वतन्त्रस्वतन्त्रत्वं कवितार्किकसिहता ।
न चास्य शक्ये निह्नोतुं निगमान्तगुरोरिव ।। ६०

(इति श्लाघावादघोषेण दिशा मुखरयन्ति)
(नेपथ्ये वैतालिक.)

इन्धे सर्वनृणा शिरस्सु तरणिश्श्रीवेङ्कटार्यो यथा
क्षीयन्ते ह्यसता मतानि विटपिच्छायास्समन्तादिव ।
फुल्ला पङ्करुहाटवी यतिपतेस्सिद्धान्तपद्या यथा
सेव्या सर्वनृणां प्रपत्तिसृतिवत्सन्ध्या च माध्यन्दिनी ।। ६१

**सभासदः** - (आकर्ण्य ऊर्ध्व चावलोक्य)

अहो गगनमध्यमध्यारूढो दिनमणि· तस्मादवश्यमेव गन्तव्यं माध्यन्दिनकृत्यनिर्वर्तनाय।

(इति निष्क्रान्ता.)

(यतीन्द्रवेङ्कटार्यौ च अन्योन्यस्नेहबंधसम्भृतानन्दौ अन्योन्यावति गौरवेण सम्मान्य स्वस्थान प्रस्थितौ)

(तदेहि आवामपि स्ववेश्मपद प्राप्नुवामेति निष्क्रान्तौ गन्धर्वदम्पती च)

## इति वेङ्कटार्यविजयवैजयन्त्यां तृतीयोऽङ्कः

# चतुर्थोऽङ्कः

(तत प्रविशति अन्त·पुरगत· सुरपुरमहाराजः वेङ्कटभूपालः, तत्पार्श्व-स्था चामरहस्ता तद्देवी च)

**देवी** - अज्ज उत्त अहोबलमठत्थाणभूसण सिरि सिरिणिवास जइदो कि सुवत्थाणं एत्तो किव्वा पहम्मि एव्व वट्ट इत्ति ण मुणिज्ज इदाणिवि। जहतहवा हुवउ अम्हकेर णअराओ सतोसेण जाअत्ति तं एव्व अलं अम्हाण भग्गं। अम्हकेर कुलगुरुस्स सिरिवंतस्स वेकडाअरिअस्स तस्सअ वाआहवदसाए णाणा विहा पवाआ समुइआ हुवीआ तेसु वेपमाणं हुवीअ। तअणि मज्झ हिअअं। (आर्यपुत्र अहोबलमठास्थान भूषण श्री श्रीनिवासयतीन्द्र कि स्वस्थानं प्राप्त किवा पथ्येव वर्तत इति न ज्ञायते इदानीमपि यथातथा वा भवतु। अस्मदीयनगरात्संतोषेण यात इति तदेवालमस्माक भाग्यम्। अस्माकं कुलगुरोश्श्रीमद्वेङ्कटार्यस्य तस्य च वादाहवदशाया नानाविधा प्रवादास्समुद्भूता आसन्। तेषु वेपमानमिवाभूत्तदानीं मम हृदयम्।)

**राजा** - तदानी करकावृष्टिदन्तुर इवाभूदयं ग्रामस्तदीयप्रौढवादाहवा-र्भटीभि.।

सिहाविव विनर्दन्तौ व्याघ्राविव दुरासदौ ।
वादाहवमतानिष्टावुभावपि सुधीमणी ।। १

तथाविधो वादाहवस्तु कदापि मया न दृष्टचरः न द्रक्ष्यते चेत परं कदापि। तत्राप्यस्मदीयकुलगुरो. पाण्डित्यचण्डिमा सकलजगदतिलङ्घी।

जनस्थाने राघवस्य पार्थस्योत्तरगोग्रहे ।
यादृश्यौ चण्डतालीले तथा दृष्टे गुरोरपि ।। २

**देवी** - (सहर्षम्) अपुण्णवीसावरिसस्स अम्हकेर कुलगुरुस्स कहमेरिसो पंडिच्च विहवो। (अपूर्णविशतिवर्षस्य अस्मत्कुलगुरो. कथमेतादृश पाण्डित्यविभव·।)

**राजा** - पुरातनसुकृताना फलमिदम्। किञ्च न केवलं अयं वेङ्कटार्य एवैतादृश कि त्वयं वश एव तादृश। श्रुणु तावत्तत्र दिङ्मात्रोदाहरणं वेङ्कटार्यज्यायस· श्रीनिवासताताचार्यस्य लोकोत्तर चरित्रम्। अयं हि श्रीनिवासताताचार्य स्वस्य व्यवहितानुजन्मना श्रीमता बुच्चि वेङ्कटा चार्येण सह औकुनगरीमलङ्कुर्वन्नवर्तत। तदा हि तत्रत्याद्वैतमण्डले लक्षमुद्राव्ययसाध्य पौण्डरीकं नाम क्रतुरारभ्यत। तन्महोत्सवाय च नानादेशेभ्य· समभ्यर्थिता बहवः पण्डितपञ्चानना ततो पि बहवो मीमांसाशास्त्रतलस्पर्शिज्ञानगरिमाणश्श्रौतविचारधौरेया भूतलबृहस्पतय सहस्रशस्समवेता। तदवलम्बेन च यज्ञारम्भस्समुदजृम्भत। तस्मिंश्च यज्ञे स्वीयगोष्ठ्या. पाण्डित्याधिक्यसंभावनया श्रीनिवासताताचार्यस्य चतुर्दशवार्षिकत्वेन 'बालोऽयं कि कुर्या'दित्यवज्ञया च तमनादृत्यैव क्रत्वनुष्ठानमारब्धम्। तत्र च गरुडवर्ष्मनिर्वर्तनाय इष्टिकोपधानदशाया ऋत्विजां श्रौतगृह्यप्राग्लभ्यदोषेनगरुडाकृतिनिष्पादनं दुश्शकमभू-त्तदानीमनाहूतोऽपि श्रीनिवासतातार्यः एकादशवार्षिकेण अनुजन्मना बुच्चिवेङ्कटाचार्येण सह तत्र गत्वा तेन गृह्यं ग्रन्थं वाचयन् स्वयमिष्टिका उपदधानः। क्षणेन गरुडशरीरं निष्पादितवान्। तत्तादृशं तस्य पाण्डित्य वैभवं अवलोक्य सन्तुष्टचित्ता अद्वैतिनस्सर्वेऽपि तस्य सर्वोपद्रष्टृत्वपदं प्रदाय अनुदिनं तं राजगुरुत्वानुरूपैश्छत्रचामरान्दोलिकादिभिरानयन्तः तं यज्ञं श्लाघ्यं निरवर्तयन्त। तथा च तस्येमे प्रशस्तिगाथे तत्रोपनिबध्दे-

श्री श्रीनिवासतातार्यो बालो विज्ञानसम्पदा ।
ह्लेपयन्निखिलान् विज्ञानचिनोद्गरुडं स्वयम् ।। ३

सर्वोपद्रष्टृपदमप्यधिष्ठाय महोदय· ।
समार्तिथत्पौण्डरीकं प्रायश्चित्तकथोज्झितम् ।। ४

**देवी** - (सविस्मयम्) ण केवल पंडिओ कम्मसूरोवि इमो (न केवलं पण्डित कर्मशूरोऽप्ययम्)

**राजा** - (विहस्य)

सर्वेऽपि कर्मठा ह्यस्मिन् वंशे मीमासिताध्वरा ।
ब्रह्मनिष्ठाश्च किञ्चाहो सर्वशास्त्रेषु दंशिताः ।। ५

किञ्च स्वापदानान्तरं श्रुणु। अयमष्टवार्षिक एव बालः औकुनगरीमधिवसन् तत्र कस्मिंश्चिद्दिवसे सायाह्ने विविक्त· तत्रत्यक्षीरनद्या मूलदेशं समृध्दजलालङ्कृत विविधतरुषण्डमण्डितमुपेत्य तत्र सायन्तनीं सन्ध्यामुपास्य पुनर्गृहं प्रतिनिविवृत्सु. विविक्ते तत्रस्थले अरब्बीभाषया परस्परं कलहायमानयोः कयोश्चित्तुरुष्कयूनोरनतिदूरे स्वय तद्भाषानभिज्ञोऽपि तयोर्विलक्षणोच्चारणवैखरीश्रवणसमुत्सुक कियच्चिरं विलम्ब्य अदूरव्यवहिताभ्यां सहैव ताभ्यां ग्रामं प्रविष्ट परेद्यव्युदये दण्डाधिकारिसविधमुपगताभ्यां परस्परयोरुपरि परस्पर दोष मारोपयद्भ्यां कलहस्य विविक्तदेशप्रवृत्ततया साक्ष्यन्तराभावादपर्याप्तवयस्कोऽपि ताभ्यां साक्षित्वेन वृतोऽयं दण्डाधिकारिणा च स्वास्थान मानाय्य विचारितः "नाहमनयोरेकतरं दुष्टमदुष्टं वा निर्देष्टुं शक्नुया भाषार्थानभिज्ञतया, किन्तु उभयोरप्यनयोर्मुखोद्गतमुक्तिजाल तावदानुपूर्व्या विवेचयामीत्युक्त्वा प्रथममनेन एवमुक्तं तदुपरि पश्चादनेनैवमुक्तं तदुपरि

पुनरपि प्राथमिकेनैवमुक्त, तदुपरि पुनरपि द्वैतीयीकेन इत्थमुक्त इति गोमूत्रिकाबन्धनयेन सकलमपि तयोर्वाक्कलह अपरित्यक्त वर्णाक्षर प्रक्रम अपरित्यक्ततत्तत्स्थलीयकाकुस्वरविशेषं कार्त्स्न्येन निवेदितवान्। तत्सकलमाकर्ण्य तयोर्मध्ये शिक्षणीयस्य शिक्षा मोक्तव्यस्य च मोचनं विधाय अस्य श्रीनिवासतातार्यस्य बुध्दिसौक्ष्म्यविस्मितो दण्डाधिकारी देवाशसम्भव महापुरुषमेन निश्चित्य पारितोषिकेण बहूकुर्वन् सगौरव स्वभृत्यपुरुषै गृह प्रापित । तत्रापीयमस्य प्रशस्तिगाथा श्रूयते-

भोजराजसभास्थान्यामेकसन्थिरभूत्पुरा ।
अद्य श्रीवासतातार्य प्रत्यक्षो ह्येकसन्थिक ।। इति ६

किञ्चायं पञ्चवर्षस्सन् वञ्चयन् मक्षिकाख्यया।
हेमपात्रग्रहीतारमग्रहीच्चोरमुत्सुकः।। ७

**देवी** - (साश्रु) ए आरिस महा पडिहासाली अपुण्णट्ठा दह वरिसो एव्व दिसा विअअ पुउट्टो सईअ तेअप्पडिहअ तेएहि सत्तवेहि अहिचार विहिणा पिउभूअं गमिअत्ति अहिण्हं खिज्जइ मह हिअअ (एतादृशमहाप्रतिभाशाली अपूर्णाष्टादशवर्ष एव दिग्विजयप्रवृत्त स्वकीयतेजःप्रतिहततेजोभिश्शात्रवैराभिचारिकविधिना पितृभूयं गमित इत्यभीष्ण खिद्यते मे हृदयम्।)

**राजा** - (साश्रु) तस्मिन्नवसरे मया दृष्टश्च किमेतदिति मया पृष्टस्सन् अभिचारिकमन्त्रप्रभावनिरुध्दकण्ठः प्रतिवक्तुमशक्नुवन् मामकं कर्म तादृशमिति सूचयन् कराङ्गुलीभिः फालतलमभिमृश्य नेत्राम्बुजेन्यमीलयत्।

**देवी** - हा भूअल बिहप्फ्ई परमपवित्तस्स तुज्झवि आहिचारिअ मत बाहा सव्वत्ता। हधि दइव हधि दइव। (हा भूतलबृहस्पते परमपवित्रस्य तवाप्यभिचारिकमन्त्रबाधा सवृत्ता। हा धिग्दैवम् हा धिग्दैवम्।) (इत्यश्रुवर्ष वर्षयति)

**राजा** - प्रिये समाश्वसिहि समाश्वासिहि-

आचिकित्स्यप्रभावाणा कर्मणा त्रिदशेष्वपि ।
उपभोगात्पृथङ्नूत्न पन्था भुवि न विद्यते।। ८

**देवी** - सच्च वइक्कंत चिताए किवि न कज्ज होइ। कितु वेकड आरिओवि पडिच्च दप्पेण किजेत्त जत्ताए पउट्टो हवेइअ काअरं मे हिअअ। (सत्यमतिक्रान्तचिन्तया किमपि न कार्य भवति किन्तु वेङ्कटार्योऽपि पाण्डित्यदर्पेण कि जैत्रयात्रायां प्रवृत्तो भवेदिति कातर मम हृदयम्।)

(प्रविश्य पटाक्षेपेण प्रतिहारी)

महाराज मंतिणा तुम्ह पहिआ इआ पत्तिआ लेह संवाहओउ दुवारदेसम्मि तुम्हप्पडिवअण पडिक्खओ वट्टइ। (महाराज। मन्त्रिणा तुभ्यं प्रहितेय पत्रिका, लेखसंवाहकस्तु द्वारदेशे युष्मत्प्रतिवचन प्रतीक्षको वर्तते।)

(इति पत्रं समर्पयति)

**राजा** - (गृहीत्वा वाचयति)

अपयाति पुरादतो ह्यकस्मात्परिबर्हैश्च परिच्छदैश्च साकम् ।
ननु वेङ्कटदेशिकावतंस किमिहाद्याचरणीयमत्र शाधि।। ९

**देवी** - कि एदं अच्चाहिदं । अज्जउत्त सव्वो पाएहि सिरि वेकडा

अरिअ पञ्चावट्टेसु अम्ह णअरभूसण अम्हदेस भूसण किबहुणा समत्त भरअखड भूसण खुसो पडिआखडलो तईअ परमप्पीइ भाअणस्स पुरिसस्स छेत्तविसअम्मि अहिअद्दविण देज्जआ रूवबाहा अहिआरि अणेहि परिकप्पि एत्ति मए सुअ। (किमेतदत्याहितं आर्यपुत्र सर्वोपायै श्री वेङ्कटाचार्य प्रत्यावर्तय। अस्मन्नगरभूषण अस्मद्देशभूषण कि बहुना समस्तभरतखण्डभूषण खलु स पण्डिताखण्डलः। तदीय परमप्रीति भाजनस्य पुरुषस्य क्षेत्रविषये अधिकद्रविणदेयतारूपबाधा अधिकारि जनै. परिकल्पितेति मया श्रुतम्।)

ताए अवण्णाए दुम्मणामाणो स महाणुहावो पत्थाण अहि रोइअ वत्तोत्ति अह तक्केम्मि। त दुराण पुढुमं णिवट्टेसु। तस्स महाणुहावस्स अम्म रट्ठाओ ओयाणे तअपेक्खाए अम्हाणं। अहिअं अजस। असेअच णध्धित्ति दढं जाणेसु। अम्हाणं कुलगुरूखु सो महप्पभावो। (तया अवज्ञया दुर्मनायमानस्स महानुभाव प्रस्थानमभिरोचितवानित्यहं तर्कयामि। तां दुराज्ञां प्रथमं निवर्तय। तस्य महानुभावस्य अस्मद्राष्ट्रादपयाने तदपेक्षया अस्माकमधिकं अयशः आश्रेयश्च नास्तीति दृढ जानीहि। अस्माकं कुलगुरुः खलु स महाप्रभाव )

(इति विज्ञापयति)

**राजा** - उचितज्ञे हे देवि कि मा सर्वथा अज्ञकोटौ निवेश्य एवं भणसि। सर्वथा अहं जानामि अस्मत्कुलगुरुं लोकोत्तरपाण्डित्यभूषितं सकलजगत्सभाजनभाजनं मादृशैस्सहस्रेणापि भूपालैर्दुरुल्लङ्घ्यशासनं तृणीकृतपुरन्दरं पण्डितमूर्धन्यम्। नास्य विप्रियाचरणं अहं मनसापि संकल्पयामि। प्रत्यावर्तयिष्ये च तं महानुभावं सर्वप्रयत्नैः। समाश्वसिहि

(इति महिषी समाश्वास्य) हे प्रतिहारि प्रकृतलेखसवाहकमुखेन मम प्रधानमन्त्रिणं सभास्थनीमानयस्व। अहमपि सभास्थानीमेवाधिष्ठास्यामि इति परिवृत्य सभामण्डपे सिहासनमधिष्ठाय परिमितपरिवारसमेत मन्त्रिण आगमनं प्रतीक्षते।)

(तत प्रविशति सभयसभ्रम मन्त्री)

**मन्त्री** - महाराज को नियोग आज्ञापयतु।

**राजा** - (कोपारुणाक्ष ) मह्यमनिवेद्य कार्यकारिणे नाहमित प्रभृति भवत आज्ञापयता। अस्मत्कुलगुरु वेङ्कटाचार्यमेतद्ग्रामस्थिरानुराग माकलय्य मच्चक्षुषोर्गोचरीभव। (इति मुखे भ्रूकुटिमाकलयति)

**मन्त्री** - (अनेकैरधिकारिभिस्सह महाजनैस्तुरगरथैस्ससम्भ्रममनुधाव्य श्री वेङ्कटार्यसमधिष्ठिताया आन्दोलिकाया. पुरत. दण्डवन्निपत्य सप्रार्थन वेङ्कटार्यमित्थमभ्यधत्त।)

भोभो महाशय क एष तवाद्य कोप· स्वीयेषु दासविसरेषु महानपूर्व।
अस्मन्मुखेन नृपति प्रणतोऽतिमात्रमभ्यर्थयत्युपशमं भज मुक्तरोष।१०

**वेङ्कटार्यः** - (प्रत्युत्तरमकथयन् कंचन श्लोकं विलिख्य राज्ञे देहीति मन्त्रिणे ददौ।)

**मन्त्री**- (स्वयं वेङ्कटार्यपरिसर एव स्थित्वा अश्वसादिनो मुखेन राज्ञे तां पत्रिका प्रेषयति।)

**अश्वसादी** - (सरभसमागत्य एकहस्तप्रणामेन राजानमभिवन्द्य ता पत्रिकामर्पयति।)

**राजा** - पत्रिकामुन्मोच्य वाचयति)

करीबरीभरीति चेद्दिशं सरीसरीतिकां
स्थिरीचरीकरोति चेन्नचञ्चरीकरीतिकाम्।

वरीवरीति सारस जरीगृधीति मञ्जरी
जरीगृहीति षट्पदो निरीतिरीतिरीदृशी ।।इति ११

(किञ्चिद्विलम्बेन अवधारितपद्यार्थ· परिदूनमानस वेङ्कटार्यस्य प्रत्यावर्तनाय चतुरङ्गबलसमेतस्स्वयमेव गत्वा वेङ्कटार्यसम्बन्धिन्या आन्दोलिकाया प्रसर्पन्त्या 'पुरस्तान्मामुल्लङ्घ्य गच्छतु गुरूत्तंस' इति वेङ्कटार्य गतिप्ररोधक पथि तिर्यक्शिश्ये। ततो वेङ्कटाचार्य आन्दोलिकाया अवतरन् राजानमुद्दिश्य गिरमित्थमभ्यधत्त।)

**वेङ्कटार्यः** - महाराज राजधर्ममजानन्निव किमिति (कुतइत्थ) इह व्याप्रियसे। श्रुणु तावद्भगवता दाशरथिना समुदीरितान् श्लोकान् स्मारयामि त्वाम्।

कि मां भरत कुर्वाण तात प्रत्युपवेक्ष्यसि ।
ब्राह्मणो ह्येकपार्श्वेन नरान् रोध्दुमिहार्हति।। १२

न तु मूर्धावसिक्तानां विधि. प्रत्युपवेशने ।
उत्तिष्ठ नरशार्दूल हित्वैतद्दारुणं व्रतम् ।। १३

इत्येते श्लोकाः किमज्ञातपूर्वास्ते । (इति हस्तमवलम्ब्य उत्थापयति)

**राजा** - (उत्थाय साञ्जलिबन्धम्)

क्षन्तव्योऽद्य मम प्रमादवशतो मन्तूद्भव कोऽपिचे-
न्नन्ताऽस्म्यद्य सहस्रशश्चरणयोर्हन्तानुकम्पां कुरु ।। १४

**वेङ्कटार्यः** - (सस्मितम्)

महाराज न ते कश्चिदपराधोदयस्त्वत.।
परिवारकृतान् मन्तून् क्षमसे दोष एष ते ।। १५

प्राग्जन्मक्लृप्तसुकृतोपचित हि तेज·
देवो ददाति मनुजास्तदमृष्यमाणा. ।
द्रुह्यन्ति हन्त विविध पुरुषाय तस्मै
राज्ञां प्रविश्य निकटे प्रकटाभ्यसूया· ॥ १६

श्रीवासदेशिकलिपिप्रतिमानलिप्या त्वद्द्रोहगर्भमुपलिख्यत कञ्चपत्रम् ।
अस्यान्तरङ्गपुरुषस्य निबध्य वस्त्रे तुभ्यं प्रदर्शितवतः पुरुषाधमस्य ।१७

मा व्यस्मर·स्म ननु जात्वपि तत्प्रणात्या
द्रुह्यन्ति मह्यमपि हन्त जनास्त्वदीयाः ।
त्वं वेत्स्यहो न किल वेत्सि वय न विद्म·
खेदस्तु मे मनसि दुष्प्रणुदस्सदैव ॥ १८

पौरा जना परिवदन्ति गुरुत्वमेत
त्सावज्ञमज्ञपुरुषाः व्यथयन्ति चास्मान् ।
एवं स्थिते सुरपुरे किमिहास्ति कार्य
काशी गया किमथवा मधुरापुरीयम् ॥ १९

तेजस्विनो भुवनमेव भवेत्स्ववेश्म
जन्मस्थलं तु बहुशत्रुविसंस्थुलं स्यात् ।
तस्मात्सुखस्य यशसोऽपि च लाभलोभी
काङ्क्षेद्दिगन्तरनिरन्तरनित्ययात्राम् ॥ २०

नो जातुचिज्जनन भुव्यभिलाषुकस्स्या ।
दित्येष सर्वविदुषां सुहितस्सुपन्थाः ॥ २१

**राजा** - (तदेतदाकर्ण्य तदीयपादपद्मयोश्शिरस्सघटयन्)

आचार्योत्तस कोऽय श्रवणकटुतर. कर्कशो वाग्विलास
नाह सर्वात्मना त्वय्यपचरणविधौ व्यापृतस्स्या कदापि ।
पार्श्वस्थाना यथेच्छव्यवहृतिमपि च स्तम्भयेयं दमित्वा
क्षन्तव्य स्यात्कदाचिद्विवशपरिणत मन्तुलेशस्त्वयाऽपि ।।२२

तस्मात्साम्प्रतमप्पलार्यविषय मन्तु क्षमेथास्तरा
मीदृग्वृत्तिरित· परं न भविता य कोऽपि राष्ट्रे मम ।
अद्य द्रोहिणमप्यवेहि विषयादुच्चाटयिष्येऽधुना
प्रस्थानाद्विरम प्रसीद भगवन् मूर्ध्ना नत· पादयो· ।। २३

**वेङ्कटार्यः** - (अंघ्रियुगलाद्राजानमुत्थाप्य)
जानामि त्वां सुजनतिलकं नित्यमाचार्यनिघ्न
त्वत्तः किञ्चित्किमपि न भवेद्विप्रिय हि प्रजानाम् ।
दुष्टान् पार्श्वस्थपुटनिबिडान् सद्य उद्वासयेथा
स्तेभ्यो राज्यच्युतिरपि भवेज्ज्ञागृहि त्व खलेभ्य.।। २४

**राजा**-(साञ्जलिबन्धम्) यदादिशति भगवान्। (इति सर्वमभ्युपगच्छति)

**वेङ्कटार्यः** - इत्थं त्वदीयहितमद्य तवोपदेष्टुं
श्लोकस्तथा विलिखितः प्रहितश्च तुभ्यम् ।
कोपो न मे त्वयि कदापि नृपालमौलेऽ -
नुज्ञां प्रदेहि कलये ननु जैत्रयात्राम् ।। २५

**राजा** - एतावत्प्रार्थना मे किमिह भगवतो जैत्रयात्राप्रक्लुप्त्यै
तस्मान्नायं सुपन्था तदिह सुरपुरी नित्यमास्थाय विद्वन्।
संसज्ञीकृत्य शिष्यान् दिशिदिशि विसृजेर्मङ्क्षु पुङ्खानुपुङ्खं
मार्ताण्ड· स्वीयरश्मीनिव गगनगतस्तद्धि कीर्ते प्रतिष्ठा ।।२६

अस्माकमप्यनघभूषणमेतदेव युष्मादृशा ननु मुखात्सकलार्थबोधः।
राष्ट्रस्य चाभरणमीदृशपण्डितेन्द्रास्तस्मान्न कुत्रचिदपि व्रजितु प्रतीच्छे ।।
किञ्च

पश्याहोबलसंयमीन्द्रसमरे ससाधित ते यश.
शश्वद्भासयते तुषारकिरणज्योत्स्नेव कृत्स्ना दिश ।
नैषाचार्य यशोझरी तव पर किन्त्वस्मदीयाखिल
क्ष्माचक्रस्य पुरस्य चास्य भवकद्वशस्य चौन्नत्यदा ।। २८

**वेङ्कटार्यः -**

नृपतिलक तवोक्तिजालमेतत्सकलमपि ह्यकलङ्कमञ्चितार्थम् ।
तदपि ममवचो विचाररम्य हृदि कलये परिचिन्तयेश्च शश्वत् ।।२९

तथाहि

"प्रथमवयसि भूष्णु. पर्यटेत्सर्वदेशान्
विविधबुधमनोज्ञा निर्विशेद्राजगोष्ठीः ।
अथ च कथकसिहांस्तर्जयेद्वाग्झरीभिः
त्रिजगदपि यशोभिः पूरयेत्पारदाभै ।।" ३०

अथ च

धनकनकवस्तुवाहनसमृद्धिमान् प्राप्नुयाञ्च निजभवनम् ।
स्वार्जितधनेन सुख्यन् क्षिपेत्ततः प्रवचनेन निजमायुः।। ३१

मद्भ्राता ननु बुञ्चिवेङ्कटगुरुश्श्रीवाससूरेस्सुता
श्चत्वार. प्रथिताः प्रचण्डधिषणाश्शौण्डीर्यवेलायिताः ।
त्वत्सान्निध्यजुषस्त्वदुक्तविधया सर्वार्थनिर्वाहिण.
कीर्तिस्फूर्तिजुषोऽनिशं सुरपुरीमध्यं समध्यासते ।।३२

किञ्च

श्रीवासदेशिकनिदेशवशादशेष
देशेषु लक्ष्मणमुनेर्मतमेधनीयम् ।
आज्ञा न चाहमतिलङ्घयितु क्षमस्स्या
त्व चापि भूपतिमणे गुरुधूर्वहस्य ॥ ३३

अपि च शृणु। किञ्च

यादृक्त्वदीयदृढदोर्बलचण्डिमाऽयम्
तादृङ्मदीयघनवाग्बलचण्डिमाऽपि ।
रोधोऽनयोरनुचितो ननु चेदरौत्सी
दैवेन दत्तविभवो भुवि निष्फलस्स्यात् ॥ ३४

पुण्याख्या राजधानी जयति जलनिधिप्रान्तसामन्तभूप
श्रेणीकोटीरनीराजितचरणयुगो माधवोया बिभर्ति ।
यस्यामुद्दामविद्वत्परिबृढनिबिडै श्रावणे मास्यनर्घा
वर्षे वर्षे सभा सा प्रचलति दशदिक्चक्रकूलङ्कषाख्या॥ ३५

पुण्याख्या राजधानी स्फुरति निरुपमाखण्डपाण्डित्यदर्प
प्रोच्चण्डार्यप्रकाण्डाध्युषितनृपसभाभूषिता भूविभूषा।
यस्यां मुद्रास्सहस्त्रं सदसि कृतधिया वर्षदेया प्रक्लृप्ता
तां गन्तुं कौतुकं मे वसति चिरतरात्तत्र गन्तुं प्रवृत्तः॥ ३६

ता विश्रुता जिगमिषामि सभां जिगीषु·
पुण्याभिधा सपदि कोङ्कणराजधानीम् ।
विद्या च मे दिनदिनाभ्युदयात्र भूया
द्भूयाच्छशाङ्कधवला बहुला च कीर्तिः ॥ ३७

**राजा** - (स्वगतम्) अहो महोत्साहता शूराग्रेसरता च गुरूत्तसस्य। अनुरूपोऽस्य कुलगुरुरस्माकम्। एवविधं महोत्साहमस्य कथ वितथयेयम्। किन्तु प्रोत्साहयामि महोत्साहमेन महाशयम्। (इति भ्रूसंज्ञामात्र समानीतै मुक्ताहारचन्द्रहारराङ्कवादिभिर्वेङ्कटार्यमलङ्कृत्य)

जयीभव महाधीर विजयीभव सर्वश.।
कीर्तिमाधेहि देशस्य वंशस्य स्वजनस्य च ॥ ३८

(इति स्वकीयसकलपरिवारसमेत कुसुमवर्षेण तमभिवर्षति। वेङ्कटार्योऽपि विविधाभ्युदयसिद्धिगर्भैराशीर्वादवर्षै. राजानमभिवर्षति। इति परस्पराभ्यनुज्ञया परस्परौ स्वस्वपरिवाराभ्यां सह निष्क्रान्तौ।)

## इति वेङ्कटार्यविजयवैजयन्त्यां
## चतुर्थोऽङ्कः

# पञ्चमोऽङ्कः

(तत प्रविशन्ति पुण्यराजधानी पण्डितमहासभा तन्मध्ये रत्न सिहासनासीन स वै माधवरायः दक्षिणपार्श्वे नानाफर्णीसुनामा प्रधानमन्त्री वामपार्श्वे हरिपताभिख्य पुरस्ताद्धर्माध्यक्षो रामशास्त्री च)

(पण्डिताना परस्परं वादकोलाहले प्रवर्तमाने)

**माधवरायः** - भो धर्माध्यक्ष रामशास्त्रिन् महाराजगुरुर्महा पण्डितोऽस्मत्सभा दिदृक्षु कश्चित्समागत इति त्रिचतुरेभ्य. दिवसेभ्य. प्रागवोचः। स किमर्थमधुनापि सभा नालङ्करोति।

**धर्माध्यक्षः** - काचिदर्गला प्रत्यबध्नात्तदागमनम्।

**राजा** - कीदृशी सा?

**धर्माध्यक्षः** - सहश्वेतच्छत्रचामरान्दोलिकादिभि स्वीयबिरुदैस्सभामागच्छामीति स वदति। प्रथमं पादचारीसन्नागत्य सभां जित्वा अनन्तरं छत्रचामरान्दोलिकादीनुपयुङ्क्ष्वेति अत्रत्या पण्डितमण्डली प्रतिवदति।

**माधवरायः** - छत्रचामरान्दोलिकादीनि गुरुत्वचिह्नानि तद्विषये किमर्थोऽस्माकं विवाद ।

**धर्माध्यक्षः** - केवलच्छत्रचामरादिविषयकतया नाऽयं विवादस्सवृत्त । अपि तु द्वैताद्वैतनामके पादुके विशिष्टाद्वैतनामकं किरीटं च धारयन् स्वमतमण्डनपरमतखण्डननामकाभ्या चामराभ्यां वीज्यमानः आयाति। न केवलं नाममात्रेण विक्रान्तिः। किन्तु पादुकयो· किरीटे च तथा विधाक्षरविन्यासोऽपि दृश्यते। तच्च न सहते अत्रत्या पण्डितमण्डली।

**माधवरायः** - युक्तं चैतत्। तर्हि सभां जित्वैव बिरुदा उपयोक्तव्या

इति दृढनिर्णय· प्रेष्यता तस्मै।

**धर्माध्यक्षः** - प्रेषितश्च निर्णय ।

**माधवरायः** - कि सवृत्त तदुपरि ?

**धर्माध्यक्षः** - तत्र स वदति। यद्यह भवदीयसभाया पराजितस्स्या सर्वानपीमान् बिरुदान् सर्वेषा समक्ष सभाया विसृज्य गमिष्यामि। आगच्छेय तु प्रथममेव सर्वैरपि बिरुदैः इति।

**माधवरायः** - (साश्चर्यस्मितम्) तर्हि निस्संशय महानय पण्डित.। भवतु कथ वास्य प्रत्यूषो भविष्यति वादस्य।

**धर्माध्यक्षः** - न स्फुरत्यस्माक तस्माद्देव एवात्र प्रमाणम्।

**माधवरायः** - (नानाफर्णीसु मुखमवलोकयति।)

**नानाफर्णीसुः** - महाराज मम यत्प्रतिभाति तद्विज्ञापयामि। तदुपरि देव एव प्रमाणम्।

**माधवरायः** - निवेदयस्व तावत्।

**नाना** - इत्थमेष सुवदन् सुधीमणिस्सर्वथा यदि निषिध्यते तदा ।
स्यादकीर्तिरसमर्थतामयी ह्यस्मदीयसदसो महीपते ॥ १

शक्तिरस्ति यदि पण्डिता हठात्त्याजयन्तु बिरुदान् सभाजिरे ।
नो यदि स्फुटमिहैष विन्दतां वैदुषीसदृशमग्रपूजनम् ॥ २

नह्यस्मदीयसदसि स्वपरप्रभेद विद्यैव गौरवपदं न किलाभ्यसूया ।
अत्रेत्यघोषि किल डिण्डमनादपूर्व तस्यान्यथाकरणमद्य यशःप्रतीपम् ॥

**माधवरायः** - सत्यमुक्तममात्येन। यदि द्वैताद्वैतपादुकात्याजनशक्ति स्सदसः तर्हि त्याजयन्तु। नोचेल्लोचने निमील्य सर्वमपि क्षमताम्। नहि कस्यचित्कृते सरस्वतीप्रभावदोग्धारो वयम्। तस्मादागच्छतु स

महाशय स्वीयसमस्तबिरुदैस्समेतस्सभामण्डपम्। प्रहीयता च दूत अद्यैव त महाशय सभास्थानमानेतुम्।

**धर्माध्यक्षः** - (ससाधुवादम्) यदाज्ञापयति महाराज।(इति वेङ्कटार्याय अनुरूप पुरुष प्रापयति।)

(नेपथ्ये श्रीचिह्नध्वानपूर्वकम्)

गदाधरीयखण्डन प्रचण्डवादिभण्डन
प्रकाण्डयुक्तिमण्डन प्रभूतकीर्तिहिण्डन।
जय स्वपक्षरञ्जन द्विषद्द्रुमप्रभञ्जन
प्रपञ्चदर्पभञ्जन त्रयीवधूदृगञ्जन।। ४

(इति बिरुदपद्योद्घोषः, सर्वे समाकर्णयन्ति। पण्डितास्तु कर्णारुन्तुदा न्यक्षराणीति साभ्यसूय परस्परमुखान्यवलोकन्ते।)

(पुनर्नेपथ्ये)

आसेतुस्यूतसीतापरिबृढचरणाम्भोजमुद्रात्समुद्रा
दा च क्षीराब्धिवीचीग्रसनरसलसत्कन्दरान्मन्दराद्रेः।
धीमन्तः सन्तु को वा हरमकुटनटत्स्वर्धुनीस्पर्धिनिर्य
द्वाग्धारासारशाम्यत्कविकथकघटाश्रुत्युदन्यो मदन्य.।। ५

(पुनर्जयघोषणध्वनि.)

**सर्वे** - (समाकर्ण्य) दुराधर्ष इव दृश्यतेऽयं महाशयमौलिः।

**पण्डितमण्डली** - (तं च जयोद्घोषमाकर्ण्य अन्तरुद्विग्ना अपि बहिस्स कोपस्मित शिरश्चालयन्ति।)

**वेङ्कटार्यः** - (स्वीयसमस्तबिरुदैस्सह आसभाद्वारमागत्य तत्रान्दोलिकाया अवतरन् पादुकाभ्यां किरीटेन चामराभ्यां बिरुदपद्याभ्यां च सहैव सभान्तः प्रविशति।)

**सर्वे** - (वेङ्कटार्यमवलोक्य अहो अवतारपुरुषोऽय न केवल मानुष इति विस्मयविस्फारितेक्षणा निर्निमेषं वेङ्कटार्यमुखमालोकन्ते।)

**माधवरायः** - (वेङ्कटार्यमवलोक्य)

अहो तेज पुञ्जः स्फुरति मिहिरस्येव सुमहान्
अहो दृष्टिर्धीरा तृणमिव समस्तं गणयते ।
मुखं कान्तं चोग्रं निरवधिकदर्पोद्धतमहो
अहो सर्वश्लाघ्य पुरुषमणिरेषोऽद्भुततम ।। ६

**वेङ्कटार्यः** -

अहो राजा सैषः क्षितिपतिसहस्रार्चितपद.
तथा नानाफर्णीस्-मुखसचिववर्गोऽयमतुल ।
सभा विद्वत्पूर्णा फणिपरिवृढस्यापि भयदा
हयग्रीवो देवो जयमिह कथं वा जनयिता ।। ७

(इति राजसमीपमुपसर्पति)

**माधवरायः** - (किञ्चिदुत्थाय सविनयमञ्जलिमारचयति।)

**वेङ्कटार्यः** - (पुन· प्रत्यञ्जलिपूर्वकं राजानं मङ्गलाशीर्भिरापूरयति)

**माधवरायः** - (स्वगतम्) अहो तेजस्वितास्य महापुरुषस्य साक्षात्सरस्वती मुखे नृत्यतीव भाति। ततो महापुरुषमेनं समुचित सम्भावयामि। (इति नानाफर्णीसुमुखमवलोक्य) महामते अस्य महापुरुषस्य मत्समीपे समुचितमासनं सज्जीकुरु।

**नानाफर्णीसुः** - (स्वगतम्) अहो चित्रमिदम्। यथा मम मनसि प्रतिभातं तथैव राज्ञोऽपि प्रतिभातम्।

**धर्माध्यक्षः** - (स्वगतम्) असंशयं दैवप्रभावोपबृंहिततेजा अयं महाशयः। कथमन्यथा अनुपदिष्टेनापि राज्ञा इत्थं संमान्यते?

**नानाफर्णीसुः** - (राज्ञोऽभिप्रायमालोक्य राज्ञस्समीपे रत्नस्थगित सौवर्ण मासनमाकल्पयति)

**माधवरायः** - अलङ्क्रियतामिदमासन पण्डितरत्नेन। (इति वेङ्कटार्यमादिशति)

**वेङ्कटार्यः** - (तस्मिन्नासने उपविश्य वैदिकैराशीर्वादमन्त्रैस्सुस्वर समुदीर्णैस्सभावलय मुखरयन् सोपवीतान् फलमन्त्राक्षतान् राज्ञे अर्पयति।)

**माधवरायः** - (मत्राक्षतान् किरीटे धृत्वा उपवीतान्यवलोक्य) अहो अस्मदीयं ब्राह्मण्य सम्यक्सभावितमनेन विद्वन्मूर्धन्येन धन्योऽहमस्मि। (इत्यन्तस्सन्तुष्यन् धर्माधिकारिणो मुखमवलोक्य)

धर्माध्यक्ष समीक्षस्व ब्राह्म तेजस्समुज्ज्वलम् ।
सम्भावितं ब्रह्मसूत्रै राजतेजस्तथाक्षतैः।। ८

**धर्माध्यक्षः** - (सानन्दम्) एतावत्पर्यन्त अनन्यसंशीलितोऽयं समुचित पन्था अनेन महामतिना उपदिष्ट इदानीमस्मभ्यम्।

**वेङ्कटार्यः** - कथ सर्वेऽपि गुणग्राहिणोऽत्र सदसि । अत एव दिक्चक्र माक्रान्तवती कूलङ्कषा कीर्तिरस्याः पुण्यराजधान्या.।

**धर्माध्यक्षः** - (जनान्तिकम्) महाराज कस्मिंस्तव शास्त्रे पर्याप्त पाटव कस्य वा मतस्य स्थापनकर्ता भवान् इति अनुयुङ्क्ष्वेमं महाशयम्। (इत्युपदिशति)

**माधवरायः** - (वेङ्कटार्यस्स्वकीयमुखेन कि फणति किवा करोतीति स्वयमेव ज्ञायतामिति वदन् वेङ्कटार्यस्यापरिज्ञानाय भाषया "कायमण ताहे के कर्ताहे" इति पदाभ्यां संघटितं वाक्यं प्रयुक्तवान्।

**वेङ्कटार्यः** - (तच्छ्रुत्वा)

कणभयिताहे तर्के फणभयिताहे सुशब्दगणनोदर्के।
मन्दरवृत्त वर्ते श्रुत्यन्तसुधाम्बुधौ महागर्ते ।। ९

(इति झडित्युत्तरयति।)

**राजा-** (श्रुत्वा स्मित्वा) अहो असिलतेव अस्य धिषणा भ्रमरक इव सर्वेषु विषयेषु सत्वर परिभ्रमति। अस्तु किवा फलितमनेन श्लोकेन सर्वशास्त्रेषु पाटव वेदान्ते च सारासारविवेचनं स्वस्य प्रतिजानीतेऽयं महाशय तर्हि प्रारभ्यतां शास्त्रार्थविचार·। (इति धर्माध्यक्षमादिशति)

**धर्माध्यक्षः -** (सभास्थानस्थितान् समस्तपण्डितानालोक्य) भो भोः! पण्डिताग्रेसरास्स्वेनस्वेन सर्वाभिसारेण वेङ्कटार्यमायोधयध्वम्। न वृथा महाराजे आगृह्णीध्वम्। योऽत्र ज्ञानगरिष्ठस्तमाराधयति महाराज·। (इति घर्घरगम्भीरध्वनिना दिशो मुखरयन् सर्वेभ्य आवेदयति।)

**पण्डितमण्डली -**

स्वर्णकोटीरमुट्टंकयामो वयं पादुके सत्वरं चूर्णयामो वयम् ।
चामरे खण्डशः खण्डयामो वय पश्यतेत्यद्रवन् वेङ्कटार्य प्रति।।१०

(एव सिकतापातनिरवकाश परस्सहस्रेषु पण्डितेषु एकदा वेङ्कटार्य मावृण्वत्सु सत्सु।)

**माधवरायः -** धर्माध्यक्ष सम्यग्जागृहि। वेङ्कटार्यविषये सर्व एते किमन्यथा प्रवर्तेरन्।

**धर्माध्यक्षः -** (स्मित्वा) न किचिदप्यन्यथा भवति। पण्डितानां वीरायित वैखरीयम्। अस्माभिस्तटस्थैः केवलं द्रष्टृभिर्भवितव्य को वा विजयी भविष्यत्यत्रेति।

**भारद्वाजशेषाचार्यः -** (सक्रोधम्)

रे रे मूर्खा वितथलपितैर्वीरवादै कृत व
मा स्मामुष्मिन् पतत विबुधा यद्वदग्नौ पतङ्गा·।
स्याच्चेद्वादेऽभ्यधिककुतुकं स्वस्वशक्त्या घटध्व
सन्नद्धोऽय सदसि भवदाडम्बरस्तम्भनाय ॥ ११

(इति गर्जन् तेषां संरम्भमसहमान )

श्रीमन् पैतृष्वस्रीय। हन्त समर्दस्सुमहान् सवृत्त त्वं मन्यसे चेदैकैकं गलहस्तिकया सभास्थानाद्बहिर्निक्षिपामि।

**वेङ्कटार्यः** - महामते क्षमस्व। अस्मत्प्रयत्नमन्तरा स्वयमेव ते अपसरन्ति घटिकान्तरेण। त्वमप्येतेषां वादभेदानवधेहि।

**पण्डितमण्डली** - (सक्रोधम्) कोऽयं पिचण्डिलः स्वच्छन्द जल्पति। अङ्गुल्यग्रैर्मृद्रीमोऽतिप्रसङ्गि ज्योतिरिङ्गणम्।

**वेङ्कटार्यः** - महाशयाः। क्षमध्व, किमर्थोऽयं आस्थानव्याकोप शास्त्रार्थस्तावत्प्रचलतु। परन्तु असङ्कीर्ण स्वस्वाभिनिवेशविषयशास्त्रेषु स्वस्वसंरम्भान् जल्पमुखेन।

**नानाफर्णीसुः**- महाराज परस्सहस्रपण्डितसंवलनेऽपि अकातरहृदय. अविकृतप्रसन्नगम्भीरमुखकान्तिर्वेङ्कटार्योऽय कमप्यानन्दमाकन्दलयति मम हृदये।

**माधवरायः** - सर्वथा विजयीभवत्ययमस्या सभायाम्।

**धर्माध्यक्षः** - ममाप्येष एव वितर्कः।

**माधवरायः** - धर्माध्यक्ष पश्य पश्य। प्रवृत्त. पण्डितानां पूर्वपक्षजाल. कोलाहल·।

पाणिनिकणादजैमिनिपतञ्जलिव्यासकपिलतन्त्रेषु।
वादाहवः प्रवृत्त. सहस्रधा वादिबुध्दिभेदेन ॥ १२

**नानाफर्णीसुः** - महाराज पश्य एतादृश्यपि महति कोलाहले सर्वेष्वपि वादभेदेषु सचारितदृष्टि स्मयमानवदन महोत्साहशाली सैन्धववधदिने अर्जुन इव सर्वेषामपि प्रतिवक्तुमुपक्रान्तवान् वेङ्कटार्य· । महाराज पश्य पश्य ।

धिक्कुर्वस्तार्किकौघान् सदसि कुलिशवत् कर्कशैस्तर्कशास्त्रै
र्निर्धून्वन् शाब्दिकानप्यतिनिशितधिया पक्त्रिमैर्युक्तिमार्गैः ।
भाट्टानां चाट्टहासं झडिति विघटयन् प्रेङ्खयंश्चापि साङ्ख्या
न्मृद्र(न्र)द्वैति वर्गान् व्यचरदथ मतं माध्वमुद्धूनयंश्च ॥ १३

**हरिपंत्** - (धर्माध्यक्षमुद्दिश्य) हन्त विजयी सवृत्तो वेङ्कटार्य एतद् दार्ढ्ये नैव 'यद्यहं पराजितस्स्या तर्हि चामरकिरीटपादुकादिकं सर्वमपि बिरुदजात सभायां विसृज्य गमिष्यामी' ति प्रतिज्ञातमभूदनेन महामहिम्ना ।

**माधवरायः** - (कराञ्चलसञ्ज्ञया वादाहवे निष्प्रतिद्वंद्वं प्रवर्धमानं वेङ्कटार्य वारयन् नानाफर्णीस् मुखमवलोक्य) महामते अद्य को नाम पण्डितः प्रथमं पूजनीयस्ताम्बूलदानादिना सभायाम् । दैनन्दिनक्रमस्तु नार्योपयुङ्क्ते इति मम प्रतिभाति ।

**नानाफर्णीसुः** - सत्यं नोपयुङ्क्ते । अथापि (इति राज्ञ. कर्णे किमपि कथयति ।)

**माधवरायः** - (सन्तुष्य) स्थाने मन्त्रिपदस्थापितो भवान् (इति संश्लाघ्य) (अनुदिनक्रमेण महार्घैरन्तरीयोत्तरीयशिरस्त्राणादिभिर्वस्त्रैष्षोड शोत्तरशतसङ्ख्याभिर्मुद्राभिरनर्घेण मूर्धाभरणेन ताम्बूलादिना च सम्पूरितं राजतभाजनं अशेषपण्डितमण्डलीमध्ये निक्षिप्य ।) 'अनुरूपः पुरुष इमा संमाननां गृह्णातु (इति उच्चैरुच्चारितवान्) (अथ सर्वेष्वपि

पण्डितेषु भयादस्पन्दमानेषु पण्डितकुलचण्डदधीति· वेङ्कटार्यः)

**वेङ्कटार्यः -**

मतपरिपाट्या वाट्या वीट्या दान विधीयता पूर्वम् ।
विद्यापरिपाट्याऽपि तु निटलाक्षस्यापि न घटते वीटी ॥ १४

(इति भणन् तत्पण्डितसभाताम्बूल स्वीयोत्तरीयसीम्नि प्रक्षिपति।)

**पण्डितमण्डली -** (व्यसनेर्ष्याकोपारुणाक्ष वेङ्कटार्य कटाक्षयति।)

**माधवरायः-** साधु भो. पण्डितकुलमार्ताण्ड साधु। अर्होऽसि सभाया अग्रपूजामधिगन्तुं युधिष्ठिरराजसूयसभायां सकलगुणपरिपूर्णो भगवान् शौरिरिव। (इत्यभिनन्दति)

(नेपथ्ये)

(सभाविश्रान्तिशंसी काहलशङ्खघोषः पण्डिता यथायथं निष्क्रान्ताः)

(वेङ्कटार्योऽपि राजानमनुज्ञाप्य तस्मिन् दिवसे विशेषतश्शोभमानै पादुकाकिरीटचामरैर्विराजमान आसभाद्वारमागत्य ततः प्रभृत्यान्दोलिकाश्वेतच्छत्रादिभिर्गृहं प्रति निष्क्रमति। राजाऽप्यन्तःपुरं प्रविशति)

## इति वेङ्कटार्यविजयवैजयन्त्यां पञ्चमोऽङ्कः

# षष्ठोऽङ्कः

(पुण्यराजधान्या अदूरविप्रकृष्टे महति विविक्ते वेश्मरत्ने धर्माध्यक्षेण रामशास्त्रिणा सह समस्ता पण्डितमण्डली प्रविशति)

**पण्डितमण्डली-** श्रीमन् धर्माध्यक्ष इदानीमपि वा समाकर्णयावहित मना किञ्चिदस्मदीयां विज्ञापनाम्। उपविशात्र किञ्चिदवसरप्रदानेन वयमप्युपविशाम । शिवरात्रिव्रतोपवासिनामस्माक नाद्य भोजनत्वरा पिशाचीबाधा इति। (सर्वे यथायोग्यमुपविशन्ति)

**धर्माध्यक्षः** - कि तद्वक्तव्यं यदर्थ वयमत्र सर्वे समाविष्टा·।

**पण्डितमण्डली** - विदितमेवेद भवतोरपि यदेतां राजधानीं वेङ्कटार्य नामा श्रीवैष्णवब्रह्मराक्षस कश्चिदाविष्ट आद्वादशवर्षमहर्निशमस्मान् बाधत इति। तेन बाध्यमानानामस्माकम्

नैवान्न स्वदते न जातु भजते चेत स्थिरत्वं क्वचित्
नित्यं भीतिरुदेति काचन न च प्रज्ञा समुद्द्योतते ।
तेजश्चाप्यपयाति हन्त गलितं शुष्का च कृत्स्ना तनु
र्नित्यं चैवहि दृश्यते स्फुटतरं तद्ब्रह्मरक्षो दिने ।। १

**धर्माध्यक्षः** - (स्मित्वा) किमर्थ नोच्चाटयते सकलैरपि महाब्राह्मणै-र्भवद्भिः पटुतरमन्त्रवादप्रयोगेण।

**पण्डितमण्डली** - स खलु अस्माभिर्विदितान् अविदिताश्च मन्त्रवादान् वेत्ति। मन्त्रिते प्रतिमन्त्रयति। अस्मदविदितैर्मन्त्रवादप्रयोगैः अस्मानेव स्तम्भयति। कदाचित्स्वप्नेऽपि समागत्य भीषयति। तद्वयं न प्रभवाम स्तत्समुच्चाटनाय।

**धर्माध्यक्षः** - अलमिदानीं रूपकपथप्रस्थानेन। का तावद्वेङ्कटार्येण

हानिरस्माकम्। प्रत्युत महान् लाभ एव। स खलु अस्मदीयब्राह्मण जात्यलङ्कारभूत. महाकुलीन वेदप्रामाण्यवादी आस्तिकाग्रेसर अस्मत् सभाभूषणं वेदविरोधिनां बौध्दजैनादीनां सभोच्छाटनमन्त्रः। एवंविधगुण शोभिनि तस्मिन् महापुरुषे किमर्थो युष्माकमकारणद्वेष। तद्विरमत तस्मै द्रोहविषयकादस्मात्प्रयत्नात्।

**अद्वैतिनः** - धर्माध्यक्ष कियती क्षमा भवताम्।

नित्य सपादुका धौर्त्याद‌द्वैतलिपिमुद्रिताम्।
अधिष्ठाय पदाऽऽयाति सभामद्वैतिनायकान् ॥ २

किमिदं वद गौरवास्पदं पदमद्वैतिजनस्य संसदि।
मरण वरमेतदीक्षणाच्चिरमद्वैतमतावलम्बिनाम् ॥ ३

**द्वैतिनः** - अस्माकमपि यद्दुःखं धर्माध्यक्ष तदूहये।
द्वैत मित्यक्षराकीर्णा पादूं सदसि पश्यताम् ॥ ४

**अद्वैतिनः** - युष्माकं गर्वभङ्गस्सम्यग्जातः। अयं विवेकः क्व यातो मणिमञ्जरीमध्वविजययोः शंकरभगवत्पादान् सङ्करपदप्रयोगेण निरङ्कुशं दूषयताम्।

**द्वैतिनः** - इदानीमावयोर्विवादो मास्तु। तृतीये विरोधिन्युपस्थिते उभाभ्यामेकीभूयस्थेयं 'वयं पञ्चोत्तरं शतम्' इति न्यायेन, अन्यथा विपदन्तरप्रवेशस्य अवकाशः स्यात्।

**द्वैतिनोऽद्वैतिनश्च** - धर्माध्यक्ष पादुकाविन्यासनामकः षष्टिश्लोकात्मक. कश्चन ग्रंथः संदृब्धोऽस्ति तदीयशिष्यैः तत्र प्राथमिकी त्रिंशच्छ्लोकी माध्वध्वंसिनामकपादविन्यासविषयिणी द्वैतीयीकी च त्रिंशच्छ्लोकी मायि ध्वंसिनामकपादविन्यासविषयिणी। यत्रेमावादिमश्लोकौ।

दक्षिणे पादुके ! द्वैतं शिक्षितु प्रस्थितस्सभाम् ।
न्यस्यामि त्वा पदा भूमौ न्यस्येद्वैत रसातले।। ५

सव्ये पादु ! सभां यास्यन् न्यस्यामि त्वां पदा भुवि।
आपाताल विमृद्नीया मतमद्वैतिनां मतम्।। ६

**धर्माध्यक्षः** –पाण्डित्यमददौर्ललित्यविलासोऽयं वेङ्कटार्यस्य नात्रास्माभिः अभ्यासूया कर्तव्या। अस्मन्मते जन्मशत्रुभिर्जैनबौध्दतुरुष्कादिभिः सह स्निह्यन्तस्सल्लपन्तस्संमिलन्तश्च लौकिकव्यवहारान्निर्वर्तयन्तो दृश्यन्ते हि सर्वेऽप्यस्मदीया वयं च। तदपेक्षया कि निकृष्टं ब्रह्मवंशोद्भवस्य किरीटे धृतवेदान्तशास्त्रस्य अनर्घज्ञानघनस्य महाशय वेङ्कटार्यस्य सम्माननम्। किञ्च भवन्तोऽपि यदि शक्तिमन्त· विशिष्टाद्वैतमेव पादुकीकृत्य द्वैतमद्वैतं वा स्वाभिमतं मतं किरीटीकृत्य वेङ्कटार्य वद्व्यवहरध्वं निर्वहध्वं च सभास्थानेषु सर्वेषु स्वीयचेष्टितविष्फूर्जितं युष्मानपि सम्भावयामो वयं निष्पक्षपातया। किञ्च

पलायध्व पलायध्वं रे रे तार्किककुञ्जराः ।
कालीकान्तस्समायातो वैयाकरणकेसरी ।। ७

इति वैयाकरणा घुष्यन्ति।

पठन्तु कतिचिच्छठाः खफछठेति वाक्यच्छटाः
घटः पट इतीतरे पटु रटन्तु वाक्पाटवात् ।
वयं वकुलमञ्जरीगलदरीणमाध्वीझरी
धुरीणपदरीतिभि· फणितिभिः प्रमोदामहे ।। ८

इति कवयो घुष्यन्ति।

तदन्यमतदुर्मदज्वलितचेतसां वादिनाम् ।
शिरस्सु निहित मया पदमदक्षिणं लक्ष्यताम् ।। ९

इति मतत्रय पूर्वाचार्या एव घुष्यन्ति। सर्वत्राप्यत्र कि प्रद्वेषमेव कुर्वन्ति तत्प्रतिवादिन । किञ्च तत्तत्पुरुषविशेषस्वच्छन्दविष्फूर्जितमात्रेण पृथिवी तले कि तदनभिमतमतानि व्युच्छिद्यन्ते। अत प्रतिभाया दीर्घदीर्घ प्रचारेण सम्यग्विमृश्य स्वमतह्रासभयकातर्यवर्जितै. सर्वे विज्ञान खनय निष्पक्षपातं बहुमन्तव्या तत्कृतं भवताम् अकाण्ड भय ताण्डवेन।

**पण्डितमण्डली** -धर्माध्यक्ष सहस्रमुपदिश नास्माक मनसो विश्रान्ति स्तस्य तेजोहरणमन्तरा।

**धर्माध्यक्षः** -अशक्यफलवाञ्छिनां मनोवैयाकुलीमात्रमेव न पुनःकदापि फलानन्दानुभव ।

चन्द्राहरणकामानां मेरूध्दरणकाङ्क्षिणाम् ।
वेङ्कटार्यजयेच्छूनां चैकदैव फलोदयः ॥ १०

भो भो महाशया. किञ्चिदालोचयत।

यावन्त. पृथिवीतले कृतधियस्सर्वेऽपि चात्रागमन्
नैकेनापि पराजितोऽभवदसौ श्रीवेङ्कटार्यस्सुधी ।
य. ख्यातोऽद्य जनार्दनः पृथुयशाः श्रीरामरुद्रश्चय·
भट्टाचार्यपदाञ्चितौ सदसि तौ यामार्धतो निर्जितौ ॥ ११

अनुमाने जनार्दन इत्यनुमानखण्डे प्रसिध्देः परांकाष्टामधिरूढो जनार्दन भट्टाचार्यः। दिनकरीयव्याख्यानकर्ता जगत्प्रसिध्दो रामरुद्रभट्टाचार्यश्च वेङ्कटार्येण सह परस्परं वादाहवे परस्परयोः परस्परं माध्यस्थ्यमास्थाय साहाय्यं कृतवन्तौ। अथापि प्रत्येकं यामार्धकालेन पराजितौ। एवं गदाधरभट्टाचार्यस्य पौत्रोऽपि।

प्रधानपण्डितस्साक्षान्नवद्वीपस्य विश्रुतः।
'झञ्झामारुत'विद्वेषी यामेनैकेन पातितः ॥ १२

एव नवद्वीपप्रधानपण्डित. गदाधरस्य साक्षात्पौत्रः वेङ्कटार्यकृतं 'झञ्झा मारुत' नामकं गदाधरीयखण्डनग्रन्थं चिखण्डयिषुरागत्य हेत्वाभास सामान्यनिरुक्तौ 'अत्र वदन्ति' कल्पोपरि वेङ्कटार्यनिर्मिते चत्वारिश दतिव्याप्तिपञ्जरे संकीलितप्रतिभाबलः याममात्रं परिश्रम्य पराजितः। एवं बहव पण्डितव्याघ्रा· कवितार्किकसिहेन वेङ्कटार्येण भवत्समक्षमेव पराजिता। किमत. कार्यमस्माभिः। अन्यच्च न केवलं शास्त्रमात्रशूरो-ऽयम् अपि तु अतीव चतुरः युक्तिशूर उक्तिप्रत्युक्तिशूरश्च।

तथाहि। कस्मिंश्चिद्दिवसे वेङ्कटार्येण सह वादाहवसङ्गतः कश्चिदौत्तराहो विपश्चिद्वेङ्कटार्यस्य वाग्झरीममृष्यमाण· 'औत्तराह पिण्डो-ऽहं न बिभेमि भवदीयवागाडम्बरात्' इत्युक्तवान्। ततश्च वेङ्कटार्योऽयं 'रे रे औत्तराहपिण्ड दाक्षिणात्यवायसोऽयं न कदापि त्वां परित्यजत्य कबलीकुर्वन्' इति तं परिहसन् क्षणेन तस्य वादं छिन्नभिन्नं विधाय लीलयैव तं विजिग्ये।

एवमेकस्मिन् दिने सभायां पूर्वपक्षकरणे प्रवृत्तं 'आनन्दमयोऽ भ्यासा'दित्युपक्रम्य अस्फूर्तिदोषेण विश्रान्तवदनं 'न स्फुरत्यनभ्यासा' दिति चमत्कारोक्त्या परिहसन्निव अवज्ञासङ्कटान्निरमोचयत्।

एकदा च 'अन्त्यजा आगता' इति सभायां कर्णाटभाषया परि हासकेलीं वितन्वत्सु केषुचिन्माध्वकदम्बेषु "सर्वेऽप्यन्त्यजा एव। अयं राजा, इमे सर्वे द्विजाः, इमाः प्रजाः, वयं रामानुजाः, अत्र समाजे यूयमेव तु परं, 'मादिगाः'। नापरे केचिदपी"ति कर्णाटभाषयैवोत्तरं दत्तवान्। तस्यां भाषायां 'मादिग' शब्दश्चण्डालवाचकः, "मां-माकारं

आदौ गच्छन्ती''ति प्रकृतानुसारेण 'मादिग' शब्दो माध्ववाच्यपि।

एकदा च ''संगीतमपि साहित्यं सरस्वत्या स्तनद्वयम्'' इति सदसि साहितीरसिकेषु भणत्सु ''काणादं पाणिनीय च तत्पीडन-करद्वयम्'' इति सचमत्कारं उत्तरार्धमापूरितवान्।

सङ्गीतसारवेदी चाय कस्मिंश्चिद्दिने सङ्गीतशास्त्रसशयविच्छेद नार्थं स्वकीय वेश्मसमागतासु पौरगणिकासु काश्चन सशयानपनुद्य मध्ये प्रस्राववेगपीडितः तत्प्रशमनाय अधस्तादवतीर्य तदनुकूलव्यापारे प्रवृत्तः सौधशिखरस्थितया कया चित्प्रौढगणिकया साकूत 'ह्रस्व लघु' इति समुदीरितं पाणिनीयं सूत्रं समाकर्ण्य 'अव्यवहिताभ्या' सयोगे गुरु 'दीर्घ च' इति पाणिनीयसूत्राभ्यामेव प्रत्युत्तरं दत्तवान्। सा च विस्मेर हृदया स्मेरवदना च वेङ्कटार्य साकूतकुतुकै कटाक्षैरवकीर्णितवती।

यदि सङ्केतपूर्वक सङ्घीभूय भवद्भिः कपटकोलाहल उपक्रम्येत। तदा सुरपुरात्स्वीयजनमय नियमेनावाहयिष्यति। सुरपुरादागतास्सर्वेऽपि वेङ्कटार्यायन्ते अस्मदुपमर्दने।

अयं च नापूर्वो विषयः। अपि तु सर्वैरपि भवद्भिरनुभूत एव अथापि स्मारयामि संक्षेपेण तां कथां उपवर्णयन् कतिपयवर्षेभ्य. प्राक् वेङ्कटराघवाचार्य इति अस्य पितृव्यपुत्र. कश्चिदागत·। स तु वेङ्कटार्या दाजानुबाहु समुन्नतस्सुभगशरीरश्च पुरुषः। स चात्रत्येन केनाप्यज्ञात मुखः कस्मिंश्चिद्दिवसे वेङ्कटार्ये नानापर्णीस् गृहं गतवति सति तदीयपादुकाकिरीटचामरादीन् असारजनदुर्निर्वहान् स्वयमुपयोज्य तैरेव छत्रचामरान्दोलिकादिभि श्रीचिह्नध्वानैश्च ककुभो मुखरयन् आगत। अस्माभिश्च वेङ्कटार्य एवागत इति आसभाद्द्वारं प्रत्युद्गम्यावलोकने वेङ्कटार्यात्प्रभिन्नः कोऽपि पुरुष उपलब्धः। वयं च मुखतेजसा कमपि

पण्डितमूर्धन्यमनुमिमाना· सहागत कञ्चन पुरुषमप्राक्ष्म 'कोऽसा'विति। तेन च 'वेङ्कटार्यस्य पितृव्यपुत्रोऽय वेङ्कटराघवाचार्यनामा महापण्डित' इति निवेदितवृत्तान्ता राज्ञे निवेद्य तदाज्ञया सबहूमानमानाय्य वेङ्कटार्याय परिकल्पिते महति सुवर्णासने न्यवीविशाम। ततश्च राज्ञो भ्रूसञ्ज्ञया तुमुल कौतस्कुतवादकोलाहलः समारभ्यत। तदानीं कि ब्रूमस्तस्य महापुरुषस्य धैर्यस्थैर्यवैभवम्।

नो तिर्यक्समवेक्षते न च पुर पश्चाच्च नालोकते
नैवाबोधपराहतो न च सभाक्षोभादिना कातर ।
वादिष्वेव निविष्टदृष्टिविभव· स्थाने स्मिताञ्चन्मुखो
राजाज्ञाद्विगुणीकृताः पटुधियां शुश्राव वादार्भटी· ॥ १३

ततश्च

वर्षासम्भूतझञ्झानिलपटलसमास्फालनोद्यत्तरङ्ग-
त्वङ्गद्गङ्गाप्रवाहप्रतिभटविततप्रौढवाचाप्रपञ्चः ।
तास्तान् वादान् सुमेधास्सदसि विदलयश्चूर्णयंस्तूर्णयुक्ति
विद्वज्जालेन खेलन्निव परिददृशे लाघवश्लाघनीयः ॥ १४

अत्रान्तरे भयसमाकुलधीस्स्ववश-
माहात्म्यविच्युतिधियात्त्वरितो मनस्वी।
आन्दोलिकामधिगतो बिरुदैर्विनैव
द्रागाजगाम सदस स तु वेङ्कटार्य· ॥ १५

तमायान्त दृष्ट्वा स्मितलसितवक्त्रोऽवददसौ
किमर्थ सम्भ्रान्तस्त्वरितमुपयातोऽसि सदसीम्।
विहीन त्वत्तो मां किमु कलयसे वत्स समये
स सप्तद्वीपां गां सुखमिह जयेयं सकुतुक· ॥ १६

इति वदन्तं वेङ्कटार्यस्सप्रश्रयमित्थमवोचत्

जानामि वंशविभवं भुवनाभ्यतीतं
जानामि चाप्रतिमतेजसमद्भुतं त्वाम् ।
ज्यायंस्तथापि सदसोऽस्य दुरासदत्वा
त्सत्रासधूसरमना समुपागतोऽस्मि ॥ इति। १७

स्मित्वा वेङ्कटराघवार्योऽपि प्रत्यवादीत्

तथा चेद्वत्स पार्श्वस्थस्समवेक्षस्व मामकम् ।
वदावद कथाटोपपरिपाटनपाटवम् ॥ इति। १८

(सभा सर्वापि सभयविस्मयं वेङ्कटराघवार्यमवलोकते।)

(राजा च सस्मितं वेङ्कटार्यमुखमवलोक्य सपरिहासमिदमभाणीत्।)

**राजा** –पादुकाभ्यां किरीटेन चामराभ्यां च वर्जितम् ।
सभाऽद्य कृतकृत्येव धीमंस्त्वां समुदीक्षते ॥ १९

**वेङ्कटार्यः**– पादुकाभ्यां किरीटेन चामराभ्यां च शोभितम् ।
वेङ्कटार्य प्रपश्यन्ती कृतकृत्या कथ सभा ॥ २०

**नानाफर्णीसुः** – एकेन वेङ्कटार्येण पीडिता या भवत्सभा।
वेङ्कटार्यद्वयादद्य पीडां प्राप्तेति मे मति. ॥ २१

ततश्च वेङ्कटराघवार्यपरीक्षणाय राज्ञाऽऽज्ञापितैर्द्वैताद्वैतवादिभिः
चन्द्रिकोदितविरोधवरूथिन्युक्तयुक्तिनिकुरम्बकदम्बैः ।
लाक्ष्मणं मतमगाधममोघं धूलिजालसदृशीकृतमासीत्।। २२

ततः वेङ्कटराघवार्योऽपि

वज्रसारपरुषैरतिघोरैश्श्रीनिवासगुरुबुद्धिसुबद्धै ।
युक्तिशस्त्रनिवहैर्विमतोक्तीर्निश्चिकर्त लवशस्तिलशश्च ॥ २३

अथच

भ्रूकुटि निटलसीम्नि निबध्नस्तन्मतद्वयममर्दयदुग्र ।
नामरूपरहित च वितन्वन् सिहवच्च विननाद सुहृष्ट ॥ २४

वेङ्कटार्यश्चतुर्भुजस्सन् भ्रातरमालिङ्गति।

त परीक्ष्य बहुधा वसुधेश विस्मयोदितविशृंखलहर्ष ।
तत्क्षणाद्विबुधसंसदि तस्य स्वर्णवर्षमधिशीर्षमवर्षत्॥ २५

ततश्च केषुचिन्मासेषु व्यतीतेषु बुच्चिवेङ्कटाचार्यनामा वेङ्कटार्यस्य सगर्भ्य कश्चिदागत । सभां प्रत्यागन्तुं तस्मै छत्रचामरान्दोलिकादिकं प्रेष्यतामिति वेङ्कटार्यो मामचूचुदत्। 'प्रथमं महता२२डम्बरेण समागम्य दैववशात्कदाचित्सभाया जयविपर्यासे पश्चात्पदातिना किमर्थ गन्तव्यं, अत प्रथमं पादचारेण समागच्छतु। ज्ञानगौरव परीक्ष्य पश्चाद्वयमेव छत्रचामरान्दोलिकादिभिः सभाज्य प्रेषयिष्यामहे' इत्यहमवोचम्। तत्रोत्तरित वेङ्कटार्येण।

आन्दोलिकापदाद्भ्रष्ट कुतो यायाद्गृहानयम् ।
भवतैव च वोढव्या तदीयान्दोलिका भवेत् ॥ इति २६

तेन च वाक्येन किञ्चित्कोपानलचुम्बितमना. छत्रचामरान्दोलिकादिकांस्तस्मै परिप्रेष्य पण्डितानुपजापदूषितानकरवम्। पण्डिताश्च तदागम नानुपदमेव तं पराजिगीषव· सुवचप्रायपूर्वपक्षवादान् सहस्रशो२वाकिरन्। स तु द्वितीयो वेङ्कटार्य इव प्रचण्डपाण्डित्यगरिमा समस्ता नपि तान् पूर्वपक्षवादान् लीलयैव समाधत्त। ततश्च पातञ्जलमहाभाष्ये महान् वादाहवः प्रवृत्त.। तत्र च अस्मदीयसभास्थेषु सर्वेषु वैयाकरणेषु प्रायशः कुण्ठीभवत्सु सत्सु आद्वादशाब्दं स्ववादक्षोदक्षमपण्डिता

भावाद्धृतमौनव्रत स्वशिष्यमुखेनैव वादिनो निराकुर्वाण 'मौनिपण्डित जी' ति प्रसिद्धपण्डितप्रकाण्ड तुदन्निव इदमवोचम्।

"भो पण्डितप्रकाण्ड भवदीय मौनव्रतधारणं अद्य सफल मिति मन्ये" इति। ततश्च तद्व्रत विहाय सोऽपि वादाहवेऽवतीर्ण। तस्य च बुच्चिवेङ्कटार्यस्य च अशनिप्रपातसध्रीचीनसुतीक्ष्णयुक्तिजाल सन्धुक्षण· प्रहरमात्र सुमहान् वादाहवस्संवृत्त.। तत्र मौनिपण्डितस्यापि कुण्ठीभावचिह्नान्यवलोक्य कालातिपातव्याजेन सभां व्यश्रामयम्।

ततश्च पण्डितेषु वादाहवाद्विरतेषु बुच्चिवेङ्कटाचार्य गृहान् प्रेषयन् स्वयमेव तस्यान्दोलिकां वोढुं प्रावर्तिषि। ततश्च वेङ्कटाचार्येण बलादाकृष्य भवतो मम च किमन्तरं भवनान्दोलिकां वक्ष्यति चेन्मया व्यूढ प्राया भवेत्। परिहासवचने न हीदृशोऽभिनिवेश. कार्य.।

परिहासकथासु जातुचिन्न हि कार्य· प्रतिघो मनीषिभिः।
न हि भावनिबन्धना हि ता. वचसां काचन चातुरी हि सा ॥

इति प्रतिषिध्दो न्यवर्तिषि तस्मादभिनिवेशात्। अतोऽहं ब्रवीमि। नात्यासादयितव्यो वेङ्कटार्य., दुराधर्ष हि तत्तेजः। तेन च मैत्र्येवास्माकं समीचीना, जन्मनःप्रभृति महा(सौ)भाग्यराशिरयं महापुरुष. कदापि न पराजयपदं भविष्यति। तथाहि

सरस्वत्यास्सोऽयं निरुपमकटाक्षास्पदमिति
स्फुटं नस्सर्वेषां सकलजगती साक्षिकमपि ।
तथा लक्ष्मीदेव्या अपि महितवीक्षास्पदमयं
यतः क्षोणीदेवाःशतमनुदिनं भुञ्जत इह ॥ २८

अपिच

अनुदिनममुना हि षोडशोत्तरशतसख्यकरूप्यकावलि ।
अधिबुधसभमग्रवीटिकार्पणनियमेन सदैव लभ्यते॥ २९

किञ्च

लक्षरूप्यमितरत्नभूषणा योषिदस्य वलते गृहान्तरे ।
रूपलक्ष्यमपर स्वरूपतो नित्यवृद्धिजनक करे स्थितम् ॥३०

अत

पुरुषस्य दशां निशामयन् न विगृह्णीत कदापि तेन वै ।
अविवेकवशेन विग्रहे ननु भुङ्क्ते स्वयमेव तत्फलम् ॥ ३१

**पण्डितमण्डली** - धर्माध्यक्ष नास्माभिरिदानीं प्रद्वेष्टव्यस्सः। अपर्याप्ताश्च वयं प्रद्वेष्टुमपि। किन्तु दिगन्तप्रसिद्धपाण्डित्यगरिमाणं नवद्वीप वासिनं पुरुषोत्तमशास्त्रिणमावाह्य तन्मुखेन भङ्क्व्योऽय कलियुग पङ्क्तिमुख.।

**धर्माध्यक्षः** - (विहस्य)

हयग्रीवं देव त्रिजगदुपसेव्यं भृशमसा
वुपास्य प्राप्तोऽभूत्कविकथककण्ठीरवपदम्।
अतो वादारम्भेष्वनुकलितहेषाहलहल
स्स देवो जिह्वाग्रे नटति तदयं दुर्जय इह ॥ ३२

अतस्सर्वथैव विरमत वेङ्कटार्यविजिगीषाराजयक्ष्मणः।

(इति निष्क्रान्तः) (पण्डिताश्च यथायथं निष्क्रान्ताः)

## इति वेङ्कटार्यविजयवैजयन्त्यां

## षष्ठोऽङ्कः

# सप्तमोऽङ्कः

(पुण्यराजधान्याम् आकस्मिकमहोत्सवदर्शनसमुत्सुकपौरजनकोलाहल समाध्माताया निजगृहसौधोपरिमहोन्नतासनसमुपविष्ट अन्तेवासिकरदोधूयमानचामरद्वयमन्दमारुतसंसेव्यमान परिमितनिजपरिवारसमेत वेङ्कटार्य प्रविशति)

**वेङ्कटार्यः** - भो महामते मातुलेय शेषाचार्य महाराजमाधवरायोऽपीदानीमागमिष्यति।

**शेषाचार्यः** - तथैव शृणोमि। आकस्मिकत्वादस्य संरम्भस्य न कोऽपि तत्त्वं जानाति। एकैक एकैकधा कथयति। स्पष्टमग्रे भविष्यति। सर्वोऽप्ययमाडम्बर· अस्मद्विभीषिकारूपः इति दृढ जानामि।

**वेङ्कटार्यः** - (स्मित्वा) कि वेङ्कटार्यो बिभीषिकाभिस्त्रस्यति?

द्वादशाब्द्या सभाभिख्ये निघृष्टं निकषोपले ।
वेङ्कटार्यस्सुधीरत्नं शिरांस्येवाधिरोहति ।। १

**शेषाचार्यः** - सर्वोऽप्ययं समुद्योगः पादुकाद्वयालोकनदुष्टपण्डितमण्डलीमूलकः।

**वाधूलोऽप्पलार्यः** - तादृशं तत्पादुकाद्वयं पुरा अस्मदाचार्य श्रीनिवास महादेशिकसन्निधौ वीरवादप्रस्तावदशायामपि मया इदमेव समाम्नात। अस्मिन् प्रस्थोने शत्रुबाहुल्य दुष्परिहरमिति।

**वेङ्कटार्यः** - जन्मपत्रसमाविष्टग्रहचेष्टावशः पुमान्।
अनिच्छन्नपि तादृश्या सरण्यैव विचरिष्यति।। २

**शेषाचार्यः** - अनारुह्य जनो लोके साहसस्थानमुच्छ्रितम्।
न कीर्तिं लभते नापि संमानं जगतीतले।। ३

तस्मादहोबलस्वामिना वैघट्यमिव एतत्पण्डितमण्डल्या वैघट्यमप्य-स्माक त्रिजगत्कीर्तिकन्दलीकन्दं जानीत।

**अप्पलार्यः** - महाशय वेङ्कटार्य पश्य पश्य महीसुनासीरनासीरं प्रसर्पमाणं अस्मदीयगृहाजिरवीथ्याम्। अहो

कति तुरगा. कति पदगाः कति रथिन कति च कुञ्जरास्समदाः।
आच्छाद्य सर्वपृथिवीमायान्ति जवात्समन्ततो हन्त ॥ ४

**शेषाचार्यः**-

अयुतं किल गन्धसिन्धुरा नियुते द्वे जवनास्तुरङ्गमा।
पदगा रथिनोऽप्यसङ्ख्यका नगरेऽस्मिन् क्षितिपस्य वैभवम्॥५

**अप्पलार्यः** - प्रतिवर्ष कियानादायोऽस्य राष्ट्रस्य।

**शेषाचार्यः** - द्विपञ्चाशत्कोटयो मुद्रा ।

**अप्पलार्यः** - अहो महार्घेऽयं महाराष्ट्राणां साम्राज्यलक्ष्मीः। अत एव ढिल्लीचक्रवर्तिनां बडिशायितमिद महाराष्ट्रं राष्ट्रमिति जगत्प्रतीतिः। शेषाचार्य सेनावैभवं पश्य।

सुवर्णपल्याणविचित्रपृष्ठा सपट्टगुब्भास्ससुवर्णखल्या· ।
अधिष्ठितास्सादिभिरश्ववर्या· परस्सहस्राः प्रसरन्ति वीथ्याम्॥ ६

अन्यतः पश्य -

विचित्रवर्णोज्ज्वलपत्रवल्लीस्फुरत्करा हेमकुथावनध्दाः ।
आधोरणैरङ्कुशसम्प्रयोगैर्घीङ्कारितास्सम्प्रसरन्ति नागा.॥ ७

इतरतश्च

पदातिनो हरितपिशङ्गधूसराः सितार्जुनारुणकवचाः पृथक्पृथक्।
सहस्रशः कनकशिरस्त्रशोभिनो विसृत्वरा ननु मदयन्ति मानसम्॥८

**शेषाचार्यः** - महामते वेङ्कटार्य

घीङ्कुर्वन् मुहुरङ्कुशेन कषणात्प्रावृण्णवाम्भोदव
त्सोल्लासं च शिरस्तिर प्रचलयन् विन्ध्याद्रिकूटोपम·।
चञ्चच्चामरचुम्बितोज्ज्वलकरस्तेनाधिप वीजयन्
सेनामध्यगतो महान् गजपतिस्सदृश्यते पश्य तम् ।। ९

पश्यास्योपरि भर्ममण्डपवरे व्यालम्बिमुक्तासरे
रत्नस्तम्भविराजिते मरकतश्रेणीलसत्तोरणे ।
स्वे पार्श्वे पुरुषोत्तमाह्वयजुषा सशोभितश्शास्त्रिणा
श्रीमन् माधवराय एष जगतो भूषा दरीदृश्यते ।। १०

**वेङ्कटार्यः** - (निर्वर्ण्य)

एष क्षमापतिसहस्त्रकिरीटरत्नरोचिश्छटासततरञ्जितपादपीठ ।
श्रीमान् गुणग्रहणलालसधीर्मनस्वी कल्पद्रुमस्सुमनसा क्षितिपालरत्नम्।।११

(इत्यभिष्टुवन् सहर्षमवलोकते।)

**स वै माधवरायः** - (वेङ्कटार्यमवलोक्य)

कोटीरकोटिघटिताञ्जलिसम्पुटस्सन् सौवर्णमण्डपवरात्समवन्दत प्राक्।
तत्तादृशे महति सैनिकचक्रमध्ये दुर्धर्षशूरपटलीशतमध्यगोऽपि ।। १२

(वेङ्कटार्योऽपि पुनरञ्जलि कुर्वन् समस्ताभ्युदयगर्भिणीभिराशीर्भि परिबृंहयति।)

**पुरुषोत्तमशास्त्री** -

राजंस्तुलितकैलासप्रासादशिखरे स्थितः ।
कोऽसौ पुरुषशार्दूलो भूरिगौरवभाजनम् ।। १३

**माधवरायः** - एष एव सभासिन्धुमन्थनाद्धुतमन्दर·।
वेङ्कटार्यस्सुधीरत्नं भुवनत्रयविश्रुत ॥ १४

**पुरुषोत्तमशास्त्री-** (स्वगतम्)
अहो प्रसन्नगम्भीरभीषण सिहसन्निभम्।
मुख श्री वेङ्कटार्यस्य वैदुषीप्रतिभोज्ज्वलम् ॥ १५

(प्रकाशम्) महाराज दृप्तसिहमुखे पातितोऽहं सुधीकदम्बैः।

**माधवरायः** - सिह एव हि सिहमुखे पातयितव्यः न शार्दूल ।
(स्वर्णमण्डपे राज्ञ पृष्ठभागे स्थितो नानाफर्णीसु.)

**नानाफर्णीसुः** - प्रश्नोत्तरवाक्ययोरुभयत्रापि पातितशब्द प्रयोजयता दैवेन उपदर्शितेवोपश्रुतिः। तथाहि

उपश्रुतिविधास्तद्वत्स्वप्राश्च शकुनानि च ।
सूचयन्ति नृणा प्रायः प्रागेव भवितव्यताम् ॥ १६

**वेङ्कटार्यः** - (पुरुषोत्तम शास्त्रिणं निर्वर्ण्य)
ज्ञायते वदनेनैव ज्ञानराशिर्महानयम्।
मेधावी च न सन्देह· किंतु कापुरुषोऽस कौ ॥ १७

**ननापर्णीसुः** - राजंस्त्वरस्व मिहिरस्त्वरतेऽन्तरिक्षे
कालोऽप्यभूत्कथकवादमहाहवानाम् ।
आह्वापयस्व च वदावदसार्वभौमान्
कोलाहलोऽद्य सुमहान् भविता सभायाम् ॥ १८

**माधवरायः** - (वेङ्कटार्याय समुचितं सचिवं प्रचोद्य भेरीवादनसंज्ञया सर्वानपि कथकान् सभायां मेलयति। स्वयं च सिहासने सज्जीभूतः) भोभो दौवारिकाः किमिदानीमपि वेङ्कटार्यो नागत· आगमिष्यति वा।

**दौवारिकाः** - महाराज मध्यमार्गमभ्यागतो भवेत्। श्रूयता श्री चिह्नध्वानश्श्रूयते (ततश्च सभाद्वारि "आसेतुस्यूतसीता " "कणभयिताहे तर्के फणभयिताहे सुशब्दगणनोदर्के, मन्दरवृत्त वर्ते श्रुत्यन्त सुधाम्बुधौ महागर्ते" . गदाधरीयखण्डन प्रचण्डवादिभण्डन, प्रकाण्डयुक्तिमण्डन प्रभूतकीर्तिहिण्डन, जय स्वपक्षरञ्जन द्विषद्द्रुम प्रभञ्जन, प्रपञ्चदर्पभञ्जन त्रयीवधूदृगञ्जन" ... इति बिरुदपद्योद्घोष कोलाहलः)

(सभायां च पुरुषोत्तमशास्त्रिपार्श्वे -

पुरुषोत्तमशास्त्रिणि भुवि जीवति कथकेभनिकरपञ्चास्ये।
प्रभवति न पुरस्थ्सातुं क. खण्डयिता गदाधरीयमिह।। १९

इति तदीयप्रतिबिरुदपद्योद्घोषकलकलः।

पौरजानपदेषु जनेषु उद्वलयो· पूर्वपश्चिमसमुद्रयोरिव उभयो रनयोः महाविदुषोस्समागमो भविष्यति, जयपराजयौ कतरौ भजतो द्रष्टव्यम् इति परस्परमुदीरयत्सु सत्सु।

यथापुरं कनककिरीटपादुका परिष्कृत· प्रविमलचामरोज्ज्वलः।
सभाङ्गणं स्वबिरुदपद्यभूषणै. करम्बयन् प्रविशति वेङ्कटस्सुधीः।२०

पुरुषोत्तमशास्त्रिवर्जं यथापुरं महाराजेनसह सर्वा सभा समुत्थानाभिमुख गमनाभ्यां वेङ्कटार्य संमानयति। वेङ्कटार्यस्तु पुरुषोत्तमशास्त्रिण्येव दत्तदृष्टिः यथापुरं महाराजोपान्तस्थापिते स्वकीयस्वर्णमयासने उपविश्य दैनन्दिनिक राजकीयसमुदाचारानन्तरं किञ्चित्पार्श्वतःपरिवृत्य स्वसन्निधि स्थापितसौवर्णासनमध्यासीनं पुरुषोत्तमशास्त्रिणमालोक्य पुष्पाक्रान्तं तस्यैकतरं नयनं चालोक्य)

**वेङ्कटार्यः -**

आखण्डलस्सहस्राक्ष. विरूपाक्षस्त्रिलोचन ।
अन्ये द्विलोचनास्सर्वे को भवानेकलोचन ॥ २१

(इति श्लोकं समुदीरयति वेङ्कटार्यविद्वेषी राजपुरुषस्तं श्लोकमाकर्ण्य बिभीषिकयाऽन्यधैर्यभ्रंशनार्थ महान् संरम्भ संप्रवर्तितो, मया सर्वेणापि तेन बकबन्धनप्रयासायित, 'निग्रहस्थाननियन्त्रणपूर्वकं जल्पकथाया मेवाय प्रवर्तनीय' इति न्यायशास्त्रोक्तनिग्रहस्थाननिर्बन्धं करोति।)

**पुरुषोत्तमशास्त्री-** (स्वगतम्) विचारदूरोऽयं दुरात्मा राजपुरुष निग्रहस्थान निबन्धनरूपेण कण्ठरज्जुना मामप्युद्बध्नाति। कि कुर्यामिदानीं परिपचेलिमं कर्मफल अवश्यमनुभोक्तव्यम्। (इति चिन्तयति)

**राजपुरुषः -** भो वेङ्कटार्यसुधीमणे आचत्वारिशदब्दमयं नवद्वीपे एकस्मिन् जन्मन्येकमेव शास्त्रमिति नयेन एकं न्यायशास्त्रमेव समभ्यस्त वान्। भवांस्तु सर्वतन्त्रस्वतन्त्रमात्मानं ख्यापयसि। अतश्शास्त्रान्तर सञ्चारमन्तरा जल्पकथा प्रस्तोतव्या। अत्र च निष्पक्षपातिशिरोमणय· धर्माध्यक्षरामशास्त्रिप्रभृतय. माध्यस्थ्यमवलम्बन्ते। अष्टादशे वासरे अस्य वादस्यायुः। अष्टादशे वासरे जयपराजयो· निर्णयो भविष्यति। अत्रान्तरे एकस्मिन्नपि निग्रहस्थाने यदि सम्बध्दो भवति तदा सत्यपि विषयसौष्ठवे स पराजितकोटी परिगण्यते। 'गदाधरीयखण्डने'ति बिरुद पद्यानुसारेण गदाधरीयखण्डन भवता कर्तव्यम्। 'क खण्डयिता गदाधरीयस्य' इति तदीयबिरुद पद्यानुसारेण गदाधरीयस्य मण्डनं पुरुषोत्तमशास्त्रिणा कर्तव्यम्। अतः गदाधरीय एव प्रवर्ततां जल्पकथा प्रस्तावः युवयोरुभयोर्मध्ये य इमं नियमं नाभ्युपगच्छति स इदानीमेव पराजितकोटौ परिगण्यतेऽस्माभिः।

(इति समादिशति)

(महतीयं कठोरदशा वेङ्कटार्यस्येति वेङ्कटार्यानुयायिन पर्यालोचयन्ति। महतीय सङ्कटदशा अस्माभि परिकल्पिता पुरुषोत्तमशास्त्रिण इति सर्वेऽपि तत्रत्या पण्डिता पर्यालोचयन्ति।)

**धर्माध्यक्षः** - भो पण्डितमूर्खा असमीक्ष्यकारिभिर्मामनादृत्य सम्यक्स साधित कार्यम् भवदीयदुर्मन्त्रितेन उभयोरपि सङ्कटदशा ससिध्दा।

(इति स्वकीयपण्डितान् परिगर्हति)

**वेङ्कटार्यः** - (सभक्तिप्रकर्ष स्वगतम्)

श्रीवासदेशिक भवान् करुणासुधाभि
मामङ्कुर समभिषिच्य तरु महान्तम् ।
पुष्पप्रवालफलपत्रयुत व्यतानी
दान्तं प्रपालय तथैव महाविपद्भ्यः ॥ २२

(इति सप्रार्थ्य, प्रकाश- हेत्वाभाससामान्यनिरुक्तौ स्वीय झञ्झामारुत ग्रन्थ निबध्दा गदाधरीयखण्डनयुक्तीरुपन्यस्यति)

(रामशास्त्रिप्रभृतयो मध्यस्थाः सम्यग्ग्रग्रं गदाधरीयखण्डनमिति वेङ्कटार्योक्तयुक्तीरनूद्य पुरुषोत्तमशास्त्रिणे प्रतिपादयन्ति)

(अनन्तरं पुरुषोत्तमशास्त्र्यपि विशेषेण प्रक्षेपणादिप्रणाल्या ता अतिव्याप्तीर्वारयति)

(वेङ्कटार्य· विशेषणप्रक्षेपणे अव्याप्त्यादिदोषान् यथासम्भव मुद्भावयति। पुरुषोत्तमशास्त्र्यपि तदुपरि तत्परिहारप्रकारान् पर्यालोच्य प्रतिपादयति।

वेङ्कटार्य. तान् अपि प्रकारान् तत्तद्दोषोद्भावनेन दूषयति। एवं

अव्याप्त्यसम्भवविधाभिरतिप्रसङ्ग सङ्कीर्तनैरनुगमाकलनादिभिश्च।
जल्पाननल्पधिषणापरिकल्पितांस्तानातत्य सायसमये गृहमेयिवासौ।।२३

एवं दिनक्रमेण

मेधोत्सेधसमेधिताभिरशनिप्रख्याभिरत्यद्भुत
स्फूर्तिप्रग्रथिताभिरुद्भटधियामप्येकदाकर्णनात् ।
दुर्ज्ञानाभिरथेतरेतरमहाबुद्ध्येकवेद्यस्वका
वापोद्वापविधाभिरावृतमभूद्दुर्व्यक्तिभिर्युक्तिभि ।। २४

(अथ सप्तदशे दिवसे सभाजिरोपविष्टो महाराजो धर्माध्यक्ष मवलोक्य)

**महाराजः-** धर्माध्यक्ष रामशास्त्रिन् उपक्रान्तस्य वेङ्कटार्य पुरुषोत्तम शास्त्रिणोर्वादाहवस्य महाभारतयुध्दस्येव अष्टादशदिवस परिच्छेद्यस्य अद्य सप्तदशो दिवसः प्रवृत्त.। कोऽत्र विजेष्यते, को वा पराजेष्यते इतीदानीमपि दुर्ज्ञानमिव प्रतिभाति। श्व एव चाष्टदशदिवस तदानीं च जयपराजयाववश्यमेव निर्णेतव्यौ, उभयोरेवं समतया विवदमानयोः कथमिदं सेत्स्यति। का वाऽत्र विवादविश्रान्ति हेतुपर्यालोचना।

**रामशास्त्री -** नानापर्णीसुप्रभृतिभिर्महामतिभिस्सचिवधौरेयैरपर्यालोच्य महाराजेन कस्यचिदपरिपचेलिमधिषणस्य मन्त्रिणोऽनुरोधेन प्रवर्तितोऽयं वादाहवः। विश्रान्तिः कदा भविष्यतीति दुर्निरूपमिदानीं भीम-जरासन्धयोरिव अपरिमेयबलपराक्रमयोरनयोर्भगवता देवदेवेनैव विश्रामः कल्पनीयः। मम तु भासते मास्तु जयपराजयनिर्णयः। अद्यैव वाद विश्रान्तिं परिकल्प्य उभावपि सम्मान्येताम्। का तावताऽस्माकं हानिः। उभावपि महापुरुषौ। न तत्र सन्देहः।

**महाराजः -** धर्माध्यक्ष भवदुक्तं वादविश्रान्तिकल्पनमतीव साधु। महापुरुषयोरेतयोरेतावद्दीर्घकालं श्रमदानमेवास्माकमनुचितम्। अथापि

अद्य परिचिन्तितं यत् श्व· अष्टादशदिवस एव परिचिन्त्यता, किमर्थ मेकदिवसकृते प्रतिज्ञाभङ्गोऽङ्गीकरणीय·। किञ्च मम प्रतिभाति श्व जयपराजयनिर्णयो भविष्यतीति कुत ? ह्य· प्रभृति वेङ्कटार्यस्य मुखे उत्साह उपचीयत इव भाति सूक्ष्मदर्शने।

**रामशास्त्री** - सुसूक्ष्मदृष्ट्या पर्यालोचने ममापि तथैव भाति। तथापि वादाहवोऽय इदमित्थमेवेति न निष्क्रष्टुं शक्यते। तथाहि

यो वा जयी प्रथमतस्स पराजयी स्या-
त्पश्चाद्य एव हि पराजयवान् पुरस्तात् ।
पश्चात्स एव विजयी च भवेद्यथैव
स्याद् व्यत्ययो जयपराजययोस्समीके ।। २५

**महाराजः** - सप्तदशसु दिवसेषु माध्यस्थ्यमवलम्बमानै·कस्य कीदृशी युक्तिपरिपाटीति कि न ज्ञायते भवद्भि ।

**रामशास्त्री** - महाराज निशामय तावत् सत्यमावेदयामि।

प्रारम्भतस्त्रिदिवसी विषयोऽवबुध्दो
दुर्बोधतामभिगतोऽथ दिनक्रमेण ।
मध्यस्थताऽथ वितथा कथयामि तस्मा
न्नास्माभिरत्र सुशका विजयव्यवस्था।। २६

**महाराजः** - कथं तर्हि जयपराजयनिर्णयसम्पाद्योऽस्माभि·।

**रामशास्त्री** - इत्थम्

वादे यस्स्यात्सदसि विजयी तस्य तेजिष्ठमास्यं
हर्षोत्साहौ वदनपदगौ वाग्झरी चाप्युदग्रा ।
यो वाऽथ स्यादपजयपदं म्लानिरास्ये ध्रुवं स्यात्
दृष्ट्योश्चिन्ता भवति विदिता वाक्च संसज्जति द्राक्।। २७

एतैर्लिङ्गैर्जयपराजयौ निर्णेतव्यौ। एता सरणिमन्तरेण सम्प्रति नान्या गति ।

**महाराजः** - एभिरेव लिङ्गैः परेद्यवि निर्णेयमस्माभि । विश्रमयस्व तावदद्य तयोर्वादकोलाहलम्।

(इति निष्क्रान्तः)

(ततस्सर्वेऽपि यथायथ निष्क्रान्ताः)

(तत· प्रविशति दुरन्तचिन्तादन्तुरितमानस पुरुषोत्तमशास्त्री)

**पुरुषोत्तमशास्त्री** - हन्त दिनेदिने विरसपरिणामो वादाहवोऽयं मां व्यामोहयति।

कि नु स्याद्विजयोऽथवा परिभवो दुर्ज्ञेयमेतन्मया
सङ्गत्याऽनुमिमीमहे यदि महान् वादी जगद्दुर्जय ।
किञ्चारभ्य दिनत्रयान्निरुपमस्फूर्तिर्महोत्साहवान्
शिष्ट चैकमहो दिनं कुविधिना कष्टां दशां प्रापितः।। २८

किञ्च

प्रस्थानावसरे स्वकीयभवनद्वाराजिरे मामक
नासादारुविघट्टनान्निपतितं मौलेश्शिरस्त्रं भुवि ।
प्रत्याख्यातवती च मां चकितधीर्माता तदा सर्वथा
धिक्कृत्याखिलमागतस्य बत मे कीदृग्जयस्योदय· ।। २९

किं वाऽस्मादपयानि हन्त नगराद्धासास्पद तद्भवेत्
किं वा धैर्यवशाद्विशानि समरे स्याञ्चेज्जयव्यत्यय. ।
किं वा सन्धिपथे यतै चतुरधीर्मध्यस्थकार्य हि तत्
किं कुर्या प्रतिरुद्धसर्वसरणिर्दैवेन दुर्दैविना ।। ३०

(इति सुचिरं विचिन्त्य)

हन्ताधुना भगवती बगला परस्मै
कृत्याऽऽत्मना प्रहिणवानि हिनस्तु सा तम् ।
यद्वा परेद्यवि करोतु विरोधिनोऽस्य
वाक्स्तम्भन ह्युभयथाऽपि ममेहित स्यात् ।। ३१

(वामाक्षिस्पन्द नाटयित्वा) हन्त इदमपि मे प्रतिकूलमेव भवेदिति सूचयत्यक्षिस्पन्द । अथवा वातादिहेतोरप्यक्षिस्पन्दो भवेत्। नैकान्तिक मिदमपशकुनम्। हन्ताय परलोकविरोधी कदध्वा, कि कर्तव्यमव्यव हितदु खाद्व्यवहितं दुःख किचित्साधुतरम्।

(इति प्रवर्तितव्य मार्ग निश्चित्य कृत्यापूजोपयुक्तान् लिकुचफल बलिद्रव्यहरिद्राकुङ्कुमकुसुमाद्युपस्करान् सम्पाद्य वेङ्कटार्यमुद्दिश्च बगलां प्रयुङ्क्ते। वेङ्कटार्याय बगलां प्रहिणोति।)

(तत प्रविशत· तल्पतले सशब्दश्वासोच्छ्वासं गाढतरं निद्राणो वेङ्कटार्य. तत्प्रान्ते महिषाकारेण बगला च कृत्या।)

**बगला** - अस्य महापुरुषस्य वैष्णवं तेजः प्रतिहन्तीव मामिकां प्रवृत्तिम्।

तेजोद्भुतं प्रतिविहन्ति मम प्रवृत्तिं मध्याह्नचण्डकरदीप्तिसगर्भ्यमस्य।
कि साहसादुपरिहन्त पताम्यमुष्य किवा विमृश्यकरवै करणीयकृत्यम्।।

(इति चिन्तयन्ती विलम्बते। अत्रान्तरे नियतिबलाद्गाढनिद्रास्वप्नरूपेण परिणमते वेङ्कटार्यस्य तत्र)

**वेङ्कटार्यः** -

महिषं कञ्चिदद्राक्षीत्प्रपित्सन्तं निजोपरि ।
महोग्ररूपदुर्दर्श कोपाटोपसमुद्भटम् ।। ३३

ततस्सोद्वेग इव जाग्रद्दशामधिरूढ

प्रत्यक्षमेव महिष स ददर्श धीर  घोराकृति गगनचुम्बिविशाणशृङ्गम् ।
शैलोपमं बहुलकुङ्कुमलिप्तवक्त्र उच्छ्वासमारुतविकम्पितवृक्षषण्डम् ।।३४

ततश्च अहो कृत्याप्रयोगोऽय कस्यचिद्दुरात्मन । प्राय पुरुषोत्तम शास्त्रिणो भवेत्। स च बगलोपासक इति प्रसिध्दम्। प्रसिध्दं च बगलाया माहिषरूपमिति च। पुरुषोत्तमशास्त्रिणो वा पुरुषाधमशास्त्रिणो वा यस्य कस्य वा भवेदय प्रयोग.। भगवता श्रीनिवासमहादेशिकेन स्वप्नोपदिष्टविधया हयग्रीवप्रभया प्रतिहन्तव्येय कृत्येति निश्चित्य झडित्युत्थाय स्नात्वा धृतोर्ध्वपुण्ड्रो हयग्रीव देवमुपसद्य तत्कालसमुचितया सपर्यया तमाराध्य मौलौ कृताञ्जलिपुट इत्थमभिष्टौति।

## हयग्रीवदण्डकम्

"जय जय जय हे हयग्रीव ......

अनघ श्रीमते ह्रीमते श्रीश्रीनिवासाय विश्वानि गोपायते।" इति ततः कृत्या अदृश्या भवति। अनन्तर वेङ्कटार्य हयग्रीवस्यानुभव मनुसन्दधत् समन्ततोऽवलोक्य हन्त एतावत्पर्यन्तं दर्शनविषयस्स महिष· एतद्दण्डकसमाप्त्यनुपदं फूत्कारवातप्रशमितो दीप इव अदृश्योऽपससार।

इति हर्षविस्मयाभ्यां आस्कन्दितः कञ्चित्काल हयग्रीवानुष्टुभं जपित्वा शेषाचार्याप्पलाचार्यप्रभृतीनुद्बोध्य तेभ्य प्रतिवेदितवृत्तान्त. भय विस्मयक्रोधानन्दपरवशचित्तैस्तैस्सह जाग्रदेव किमपि किमपि सम्भाष माणः अरुणोदयवेलायां यथापुरं तैस्सह आभिगमनिकस्नान निर्वर्त्य धृतोर्ध्वपुण्ड्रः निर्वर्तिताह्निकः पुरुषोत्तमशास्त्रिणमद्य सभाया जयेयमिति कृतनिश्चय· द्विगुणितहर्षोत्साहः सभागमनाय सज्जीभवति।

अत्रान्तरे पुरुषोत्तमशास्त्री दिष्टान्त गत इति किवदन्ती वीची तरङ्गकदम्बगोलकन्यायेन सर्वत प्रवहन्ती सर्वा नगरीमभिव्याप्य राजान्तिकमारूढवती। राजभटाश्च विचारणाय समभ्यागच्छन् व्यचारयश्च

नो रोगो न च वेदना न च शिला नोद्बन्धन नो विष
नो वा कण्ठनिपीडन खलजनैर्नो कण्ठवातस्तथा।
कस्मादेष गतस्सुधीरुपरति ज्ञात तदेतद् दृढं
स्वेन प्रेरितया परोपहतया निष्पीडितः कृत्यया।। ३५

नो चेत्कुतोऽत्र लिकुचा पतिता विदीर्णा·
हारिद्रकौङ्कुमरजांसि च सङ्कुलानि।
हन्तारुणानि कुसुमानि च सम्प्रकीर्णा
न्येषा च पुस्तकघटी निहिताऽत्र नीडे।। ३६

हन्त को वाऽत्र पुस्तके विषय परिकलनीय इति तां तालपत्रपुस्तक मुष्टि सूत्रनिबध्दामुन्मुच्य पठित्वा हन्त बगलाप्रयोगविधिरय करकङ्कण प्रायमिद शत्रुपराभवार्थ स्वप्रयुक्तया तत्र शात्रवतेज प्रतिहतया स्वदेव तया कृत्यारूपया बगलायैव स्वयं निपातितोऽयमिति कृत्यास्वभाव श्चायम् यत्प्रयोगोद्देश्य पुरुष परिपीडयति, नोचेत्प्रयोक्तारमेव कबली कुरुते। कृष्णे काशीराजप्रयुक्ता प्रह्लादे चण्डामर्कप्रयुक्ता च कृत्या अत्रोदाहरण भवतु। अन्यच्चात्र विवेचनीयं कतमस्मिन् पुसि प्रेषितेयं कृत्या स्यादिति। (इदमपि विदितप्रायमेव) अयमपि नात्यन्तदुरूहो विषय· प्रसक्ते परमदारुणे वादाहवे श्रीमन्तं वेङ्कटार्यमन्तरेण कस्मिन् कृत्या प्रयुक्ता स्यादिति वेङ्कटार्यसदनं समागत्य

महाशय कोऽस्या रजन्या सवृत्तो वृत्तान्त ?

**वेङ्कटार्यः -**

स्वप्नान्ते मम महिषो महोग्ररूपस्संदृष्टो बत ददृशे तथा प्रबोधे।
सत्रस्तो हयमुखदण्डक न्यबध्ना तत्पश्चात्स महिषोऽपि नश्वरोऽभूत् ।।

एतावज्ज्ञानाम्युदन्तमिति हयग्रीवदण्डक पठति। तत्रत्यवृत्तान्तस्य सवाद्येवात्रत्यो वृत्तान्त इति निवृत्य सर्व राज्ञे न्यवेदयन्।

**माधवरायः -**

हन्ताहमस्मि महत कलुषस्य कर्ता
यद्वल्गितस्य समभूत्फलमीदृगुग्रम् ।
हा रामशास्त्रिवचनं च नचाग्रहीषं
कर्तु ह्य एव स तु वादविराममैच्छत् ।। ३८

नेत पर जयपराजयनिर्णयान्तान्
वादान् कदापि तनवै ननु वैरदिग्धान् ।
इत्यास्थितश्शुभमति स जगाम नैज
मन्त·पुरं लुलितमानसहर्षणार्थम् ।। ३९

(सर्वे च यथायथ निष्क्रान्ता·)

## इति वेङ्कटार्यविजयवैजयन्त्यां

## सप्तमोऽङ्कः

# अष्टमोऽङ्कः

(तत प्रविशति स्नातो धौताशुकधारी धृतोर्ध्वपुण्ड्र वेङ्कटाचलकटक मधिरोहन् एकाकी वेङ्कटार्य )

**वेङ्कटार्यः** - धन्योऽह इयता कालेन श्रीमद्वेङ्कटाचलकटकभुवि पदन्यास भाग्येन धन्यतमोऽपि भूयासमद्यैव त्रिलोकनाथे भगवति श्रीनिवासे स्वस्य भरविन्यासभागधेयेन। (ऊर्ध्वमवलोक्य) हन्त गगनमध्यमध्या रूढप्रायो भगवान् मयूखमाली। भरन्याससुमुहूर्तश्च प्राप्तप्राय गन्तव्यश्च इदानीमपि क्रोशमात्र पन्था। कि भगवत इज्यापूर्तिर्भवेदत्रान्तरे। मुहूर्ता तिपातशङ्कयैव हि सर्वमप्यान्दोलिकादिपरिच्छद सकलं च परिबर्ह सर्वाश्चानुयात्रिकान् शैलमूले परित्यज्य एकाकी शैलकटक मधिरोढु मारब्धवान्। अथापि इज्याकालातिपातशङ्का विसंस्थुलयति मे हृदयम्। हन्त

मासद्वयात्प्रचलितोऽजनिषि स्वदेशात्<br>
श्री श्रीनिवासपदसारससेवनाय।<br>
नित्यं ह्यवन्ध्यदिवसोऽभ्युपयामि चैव<br>
पन्थानमेवमपि मां न जहौ त्वराऽद्य ॥ १

अथवा बहुजनसंवलितानि प्रयाणान्येवमेव भवन्ति। एकाकिना च सता न गन्तुं युज्यते गौरवशालिना।

मन्दाः केचित्कतिचिदलसाः केऽपि शीघ्रान्निकामा·<br>
नित्यं केचित्कलहरसिका· केऽपि नित्यप्रकोपाः ।<br>
इत्थं भूतैः पथि परिजनैर्हन्त यात्रा कथं स्या<br>
देकाकी वा व्रजतु स कथं गौरवी भारवाही ॥ २

अथवा किमनुपयुक्तचिन्तया

जङ्घाद्वयबलेनैव सर्व निर्वोढुमुद्यतै ।
नोचेन्महान् प्रयासोऽयं सर्वोऽप्यफलतामियात् ।। ३

(इति रभसातिशयेन गत्वा भगवतश्श्रीनिवासस्य महाद्वारं प्रविशति। तत्र परिसमापितभगवदिज्याराधनान् भगवदर्चकान् स्वाभिमुखमापततः पश्यन्)

महाशया. कृपयाद्य श्रीनिवासस्य दर्शन कारयध्वम्। निवर्तध्वं च भगवत्सन्निधि प्रतीति मुहुर्मुहुरर्थयते।

**अर्चकाः** - भोभो· कस्त्वमुन्मत्त इव भासि।

आलये श्रीनिवासस्य पिहितद्वारतोरणे ।
पुनरुद्धाट्यते कि भोरायतेऽपि चतुर्मुखे ।। ४

(इति वदन्त. स्वस्वगृहान् गच्छन्ति।)

**वेङ्कटार्यः**-(भगवते क्रुध्यन् ध्वजस्तम्भमुपसृत्य भगवदभिमुखं स्थित्वा)

ऐश्वर्यमदमत्तोऽसि मां न जानासि केशव।
परैः परिभवे प्राप्ते मदधीना तव स्थितिः।। ५

(इति वदन् क्रोधेन ध्वजस्तम्भमाघट्टयति।)

(ततश्च)

स्वयमेव व्यशीर्यन्त देवद्वारस्य शृङ्खलाः।
तथोत्कीलनयन्त्रश्च विवृते च कवाटके।। ६

भगवदायतनद्वारबन्धनशृंखलाः सयावकमुद्रः द्वारोत्कीलनयन्त्रश्च शिथिलीभवति। कवाटे च स्वयमेवोद्धाटिते भवतः। ततश्च वेङ्कटार्यः महता सन्तोषेण अन्तः प्रविश्य भगवन्तं संसेव्य भरं च स्वीयं

स्वनिष्ठया संवत्सरमवधीकुर्वन्त्या आर्तप्रपत्त्या भगवति श्रीनिवासे समर्प्य कृतकृत्य. साञ्जलिबन्ध सानन्दबाष्प भगवन्तमभिष्टुवन् वर्तते। ततश्च स्वमाणवकमुखात्समाकर्णितवृत्तान्ता वैखानसा वेङ्कटार्य भर्त्स यन्त· सक्रोधसम्भ्रम पटाक्षेपेण भगवद्गर्भगृहान्त प्रविशन्ति।

तत्र कस्मिंश्चिदावेशमुखेन श्रीनिवास

रे रेऽर्चकास्त्यजत गर्जनतर्जनादि सोऽसौ महापुरुषमौलिरिहोपयात।
द्वार मयैव विवृतं घनशृङ्खलाढ्य सम्भावयध्वमिममद्भुतपण्डितेन्द्रम् ॥

अपि च समापतन्तमस्य परिवारं सम्यगाद्रियध्वम् इत्यादिशति। तत्रान्तरे

श्वेतच्छत्रं चामरे हेमदण्डे मुक्तागुच्छा प्रोज्ज्वलान्दोलिका च।
प्राप्तान्यासन् वैष्णवाना शते द्वे चिह्नैश्चान्यैस्स्वर्णकोटीरमुख्यै· ॥ ८

(ततश्चानुयोगपूर्वक तत्परिवारमुखेन सुरपुरवेङ्कटार्योऽयमिति विदित वृत्तान्ताः भयविस्मयसम्भ्रमानन्दै· किम्मीरितमानसा तमित्थमभि नन्दन्ति)

पाण्डित्यं यादृगेतस्य माहात्म्यमपि तादृशम्।
अहो श्री वेङ्कटार्योऽयं भाग्यैरध्यक्षितोऽधुना ॥ ९

(ततश्च वेङ्कटार्यः भगवदाज्ञानुसारेण वैखानसै· कुलशेखर स्थानसीमनि तुलसीदामशेषपटपञ्चशठकोपत्रिस्तीर्थप्रदानभगवच्छेषवस्त्र दानादिना बहू-कृत· तैरेव सज्जीकृतं आवासस्थानरत्नमभिगच्छति। ततश्च भगवदाल-यात्समुपनतैरमृतरससध्रीचीनैः अमृतविशेषैः परिवारेण सह कृतानुयाग भगवदुपभुक्तशेषैस्ताम्बूलीदलादिभिश्च परिपूतमुखःतत्रत्यान् भागवतान् नानाविधैस्संमाननाप्रकारैस्संमान्य तैश्च भगवद्ब्रह्मोत्सव पर्यन्तमत्रैव

सुखमास्वेति सप्रार्थितस्सानन्द ब्रह्मोत्स वानन्दानु भवायैव भगवति श्रीनिवासे समर्पितभरोऽह नित्यसूरिभिरिव भागवतै रपि तमेवार्थमनुशिष्ट. किमर्थ नाङ्गीकरवै इति तथैव सङ्कल्पते।)

**भागवताः** - हत्तीरांबावाजिरिममुदन्त वेत्स्यति चेदवश्यमागमिष्यति।

(तत प्रविशति ब्रह्मोत्सवसम्भारसविधानेच्छु भगवदास्थानसर्वाध्यक्ष विरागिशिरोमणिर्हत्तीराबावाजि )

**हत्तीराम्** - (वेङ्कटार्यमवलोक्य)

अहो महाभागचयाग्रयायी दिगन्तविश्रान्तविशालकीर्तिः ।
लक्ष्मीसरस्वत्यनुषङ्गसीमा नेत्रोत्सवस्सम्प्रति वेङ्कटार्य. ।। १०

(इत्युपसर्पति)

**वेङ्कटार्यः** - (तत्रत्यैर्निवेदितवृत्तान्त )

अहो महात्मा सकले च काले श्रीवाससेवाधिगतप्रभावः ।
विरागिरत्नं नयनद्वयी मे पीयूषवर्षैर्ननु सिञ्चतीव ।। ११

(इति प्रत्युत्थानादिना सम्भावयति)

**हत्तीराम्** - श्रीमन् पण्डितसार्वभौम भगवान् श्रीवासदेवोऽधुना
त्वां ब्रह्मोत्सवसेवनोत्कमनसं विज्ञाय हृष्यन्मनाः ।
त्वां नित्य परिवारवारसहितं ह्याराध्दुमाज्ञापय
त्स्वप्ने मां तत एव ते परिसरं प्राप्तोऽस्मि सुप्तोत्थित.।।१२

(तदाकर्ण्य तत्रत्याः सर्वे भागवता विस्मयन्ते बहूकुर्वन्ति च नितरां वेङ्कटार्यमहाशयं हृदयसीमासु)

**वेङ्कटार्यः** - शिरसि कृतं भगवदनुशासनम् परन्तु
यात्रायां सकुतूहलं भगवतो ज्ञात्वा वदान्याग्रणी-
श्श्रीमान् माधवरायभूपतिमणिस्साग्रेण लक्षेण माम् ।

मुद्राभिः परिपूजयन्नचकथद्भूयोऽप्यह प्रेषयै
कार्य चेत्तव मुद्रिकाभिरिति मा सेय कृपा श्रीपते ।। १३

अतस्समीचीनस्थानमात्रप्रतिपादेन परिपालनीय भगवदनुशासनम् अहमपि भगवन्त इत्थमेवाभ्यर्थये।

**हत्तीराम्** - देवदेवो भगवान् श्रीनिवास भवदीयकरतलगता सालभञ्जिका। भवान् यथा चालयति तथा चलति। न केवलं भवत एवैवमयं पुरा भवत्पितृव्यपादश्श्रीनिवासमहादेशिकस्समागतस्तदाप्यसौ एव मेव आवेशमुखेन तस्मै सर्वविधसमादरं समादिष्टवान्।

**वेङ्कटार्यः**- (सपुलकं साञ्जलिबन्धं च) विरागिमणे प्रपञ्चय किञ्चिदत्रा गतस्य श्रीनिवासमहादेशिकस्य प्रवृत्तमितिवृत्तम्।

**हत्तीराम्** - सकलकलाविचक्षणचक्रचूडाचुम्बितचरणारविन्दश्श्रीमान् श्रीनिवासदेशिकमणि कदाचिदत्र भगवन्तं सिसेविषुरागत·। सोऽपि परानुवृत्तिनिर्व्यपेक्षया यावदपेक्षितपुञ्जीकृतया सम्पूर्णया धनजन सम्पत्त्या समागतः। तमपि सर्वाभि· विधाभिरभिरादद्धुमादिष्टवानावेश मुखेन भगवान् श्रीनिवासः। सोपि स्थानप्रदर्शनमात्रोपचाराङ्गीकारेण भगवदनुशासनं शिरसि सगौरवं कुर्वन् अस्माभिश्च सर्वविधाभि स्संमाननाविधाभिर्भगवत्सन्निधौ संमानित: अनुदिनमहर्दिव भगवन्त मुपतिष्ठमान· कतिचिदहान्यत्र समवात्सीत्। तदा अत्रत्यास्सर्वेऽपि पण्डितास्समागत्य तेन सह सल्लप्य सन्तुष्य संश्लाघ्य स्वस्वावासान भजन्।

किञ्च यः किल सदा

अन्योन्यग्रथिताग्रबाहुपटलै· पार्श्वद्वयावस्थितैः
शिष्यैस्सम्परिकल्पते घनभुजा मध्याख्यवीथ्यां स्वयम् ।

एकाकी प्रचलन् कुशाग्रधिषणष्षट्तन्त्रपारङ्गत
स्सन्ध्यावन्दनमारचय्य पुनरप्यायाति नित्यं गृहान् ।। २४

तदानींमत्र बालसरस्वतीबिरुद अभिमन्युरिव अष्टादशवार्षिक एव सकलकलाप्रचण्ड कश्चिद्दक्षिणकलाकुलोत्पन्न· तं पण्डितकुलचण्डभानुं श्रीनिवासमहादेशिकं दिदृक्षुस्सायन्तनीं सन्ध्यामभिवन्दितुमिव ततः पूर्वमेव सायं सन्ध्यावन्दनव्यापृतेन श्रीनिवासमहादेशिकेन समधिष्ठितां श्री स्वामिपुष्करिणीमभिपेदे।

**वेङ्कटार्यः** - योऽसौ श्रीमद्रहस्यत्रयसारखण्डने प्रवृत्त तेन दोषेण झडित्येव दिष्टान्तं गत इति श्रूयते।

**हत्तीराम्** - अथ किम्।

**वेङ्कटार्यः** - ततस्तत·।

**हत्तीराम्** - तदानीं हि तयोस्सल्लापसन्दर्भश्रवणसाभिलाषा बह्वी पण्डितमण्डली तत्र सवलिता।

**वेङ्कटार्यः** - ततस्तत ।

**हत्तीराम्** - ततस्स बालसरस्वतीनामा सन्ध्यावन्दनं समाप्य समनन्तरं शिष्टवन्दनसमुदाचारमनुरुन्धानस्समागत्य श्रीनिवासमहादेशिकमवन्दत। श्रीनिवासदेशिकोपि कृतपुनर्वन्दनः मध्यस्थप्रार्थनया कञ्चि त्कालं तत्रैव समुपविष्टः।

**वेङ्कटार्यः**- ततस्तत·।

**हत्तीराम्** - ततस्सोऽयं बालसरस्वतीनामा चतुर्ष्वपि शास्त्रेषु दुरूहघट्टेषु पूर्वोत्तरग्रन्थवैघट्यविषयकान् कांश्चन संशयानप्राक्षीत्।

**वेङ्कटार्यः** - ततस्ततः।

**हत्तीराम्** - श्रीनिवासमहादेशिकस्तत्र पूर्वोत्तरग्रन्थयोरन्यथार्थकता

मुपवर्णयन् सशयोदयमेव निराचष्ट।

**वेङ्कटार्यः** - ततस्तत ।

**हत्तीराम्** - ततस्स बालसरस्वतीनामा सन्तुष्य गृह प्रविष्ट पृच्छकेभ्य श्श्रीनिवासमहादेशिक अवतारपुरुषं अप्रतिद्वन्द्वपाण्डित्यमभ्याचष्ट। श्रीनिवासदेशिकोऽपि महाबुध्दिमानिति त बहुधा प्रशशास। तत· प्रभृति श्रीनिवासमहादेशिकस्य कीर्ति शारदचन्द्रिकेव इम देशमलङ्करोति।

**वेङ्कटार्यः** - (सानन्दबाष्पम्) महामते विरागिरत्न अमृतधारावर्षेण मदीयं श्रवणयुगलमापूरित भवता, श्रीनिवासमहादेशिककरुणयैवाहं मनुष्यस्सवृत्त । भगवतो देवाच्छ्रीनिवासादपृथग्भूतो मम श्रीनिवास महादेशिक । श्रुणु तस्य महादेशिकस्य मद्विषयिणी करुणां पुण्यराजधान्यां प्रवृत्ते महति पुरुषोत्तमशास्त्रि वादकोलाहले भवितव्यताया कथ भावं परामृशति प्रथमदिन एव स्वप्नदर्शनं गतोऽय महादेशिकः।

प्रवृत्तोऽयं महाघोरो वत्स वादाहवो महान् ।
प्रतिवाद्यत्र निर्यत्नस्त्वयि कृत्यां प्रयोक्ष्यते।। १५

प्रतिहन्या हयग्रीव तेजस्सधुक्षणेन ताम् ।
मा भैषीरत्र ते भूयान्न कदापि पारभव।। १६

इति मामाभाष्य अदृश्यो बभूव। तथैव हि प्रतिवादिना कृत्या प्रयुक्ता प्रतिहता च मया हयग्रीवतेज प्रभावेण। एवं सम्बोधित· प्रतिवक्ति स महादेशिकः। अपरां च कथां श्रुणु।

कम्पसमुद्राग्रहारवासी कौशिकान्वयः कृष्णमाचार्यनामा महापन्डितः श्रीनिवासमहादेशिकविरचितं माध्वकुलावतंसव्यासरायकृत चन्द्रिकाख्यग्रन्थखण्डनरूपं तत्त्वमार्ताण्डनामकं प्रबन्धरत्नं पिपठिषु-

स्सुरपुरनगरीमभ्यगच्छत्। तदा च अहं दिग्विजयार्थं पुण्यराजधानी मध्यतिष्ठम्। सा नगरीवैकुण्ठमलङ्कृतवता श्रीनिवासमहादेशिकेन विरहिता चन्द्रिकाविरहिता शारदशर्वरीवावर्तत। स च महापण्डित विफल मनोरथया चिन्तयाऽऽक्रान्तश्श्रीनिवासमहादेशिकं प्रार्थय मानस्ता रजनी मधिशिश्ये। प्रभातप्राये तद्रजनीचरमभागे स्वप्नदशा दत्तदर्शन श्रीनिवास महादेशिक· भो विद्वदग्रेसर कौशिककृष्णमार्य

पुण्याभिधाननगरीं प्रतियाहि शीघ्रं
मञ्ज्यायसो गुरुवरस्य तनूभवोऽस्ति।
त्वां तत्र पाठयति दुर्मतधूमकेतु
र्धीमान् दिनैः कतिभिरेव हि वेङ्कटार्य·।। १७

इत्यादिश्य किलान्तरधात्। स च कृष्णमाचार्य·परेद्यन्येव सुरपुरान्निर्याय पर्यायेणातिलङ्घितद्राघिष्ठमार्गः शनैश्शनै पुण्यराजधान्या सन्न्यदधात्। तदानीं किल मदीयस्वप्ने श्रीनिवासमहादेशिकः।

वत्स कश्चिद्विपश्चित्त्वामुपेष्यति दिनेऽधुना।
तमादृत्य प्रवर्तेथा· तत्त्वमार्ताण्डपाठने ।। १८

इति सादरमादिदेश। तत. प्रबुद्धस्सन् अद्राक्षमहमुदयन्तं पूर्वाचल शिखरसीम्नि भगवन्तं रश्मिमालिनं तेन सद्य. फलोदय. स्वप्न इति निश्चिन्वन् तस्मिन् दिने सर्वानपि भगवतान् सम्भोज्य स्वयमुभुञ्जान एव आमध्याह्नपरिवर्तनं तं स्वप्नपूरुषं प्रतीक्षमाणोऽवर्तिषि। ततश्च प्रतीच्यां किञ्चिल्लम्बमाने दिवाकरबिम्बे।

अदृश्यत समागच्छन् कश्चिद्भागवतोत्तमः।
कृताह्निकः प्रसन्नात्मा श्रान्तः पुस्तकभारतः।। १९

तस्य दर्शनमात्रेणैव हर्षोत्फुल्ललोचनोऽर्घ्यपाणिरहम्

समागच्छ महाप्राज्ञ प्रतीक्षे त्वा कृतादरः।
श्रान्तोऽसि भुक्ष्व विश्रम्य पुनीह्यस्मान् महामते।। २०

इत्यर्घ्यपाद्ये समर्प्य दर्भासनमासादयं स च पादौ प्रक्षालयन्नेव परवशोत्पन्नप्रमोदबाष्पः आश्चर्यरसनिमग्नमानस उपान्तवर्तिना मुखेन परिज्ञात मामकनामधेयः सरभसमुत्तरीयसंवेष्टितकटितट प्रतिवन्दनप्रवृत्तं मां शपथशतेन प्रतिरुध्य स्वय मुहुर्मुहु· प्रणमन् बलादस्माभिस्त्याजित प्रणामातिप्रशसः दर्भासन विहाय भूमावेवोपविष्टः साञ्जलिबन्ध मिदमुवाच।

आश्चर्य महदिदमद्य मत्प्रतीक्षा कस्माद्वो मम विदिता कथं च वार्ता।
केनापि ह्यविदितनामगोत्रिणो मे को वाऽय ननु विभवो ह्यभूतपूर्वः।२१

ततश्च मयैवमुत्तरितम्

दिव्यदृष्टिसमेताना सविधे स्यात्किमद्भुतम् ।
दिव्यदृष्टिश्च नस्साक्षाच्छ्रीनिवासगुरूत्तमः ।। २२

अद्य उदयाचलचूडाचुम्बिनि भगवति मरीचिमालनि श्री श्रीनिवास महादेशिक· विरचितस्वप्रदर्शन· मामित्थमवोचत्।

वत्स कश्चिद्द्विपश्चित्त्वामुपेष्यति दिनेऽधुना।
पाठयेथास्तमादृत्य तत्त्वमार्ताण्डमन्वहम् ।। २३

इति तमेव स्वाप्नं श्लोकमुदैरिषम्। आवोचं च अवश्यमेव तत्त्वमार्ताण्डं पाठयिष्यामीति। ततश्च स पण्डितवरेण्य· नयनाभ्यां प्रवहदानन्दाश्रुधारः शिरस्यञ्जलिमाबध्नन् कतिचन क्षणान् प्रवृत्तवाक्स्तम्भः समनन्तर मित्थमभाणीत्।

अहो श्रीवासार्यो गुणखनिरहो अस्य करुणा
प्यहो सौशील्यश्रीः परिणतमहो जन्म सफलम्।
यतो दासायासौ हितमुपदिशन्नद्भुततर
तथाऽत्रापि स्वप्नात्सुकरमकरोत्कार्यमनघ.।। २४

सर्वथा मम भाग्यं फलितम्। अयं हि श्रीनिवासमहादेशिक· सुरपुर नगरे इतिकर्तव्यतामौढ्यादतीव परितप्यमानमानस दासं भवन्निकट गमनाय स्वप्नदर्शने समादिश्य तत्तादृशवैभववैदुषीसीमा श्रीमान्वेङ्कटार्य· पुण्यग्रामपर्यन्तगमनेऽप्यन्तत मां सम्भाषयेद्वा न वेति चिन्तयमानस्य मम सर्वसशयप्रशान्तये आगमनात्प्रागेव लीलाविभूतिस्थितिदशायामिव एव सर्व समीकृत्य सर्वथा मामनुगृहीतवतस्तस्य देशिकस्य महिमान इयत्तया परिच्छेत्तुमपि न शक्नोमि। किमुत वर्णयितुमिति विस्मया-नन्दसिन्धुसङ्गमसम्पोपूयमानमानस तम् अहमपि वेलातिगं विस्मयमान आतिथेय्या सम्यक्समाराध्य श्रीनिवासदेशिकसमादेशगौरवेण तत्त्व मार्ताण्डग्रन्थं सरहस्यं सोपबृहणं सत्वरमेव समध्याप्य सम्भाव्य च सवै माधवरायसभाया ,सर्वाधिकतया तं पुनरपि स्वदेशायप्राहिणवम्। स च स्वदेशे सर्वैरपि सर्वोत्तरतया सम्मान्यमानस्समुत्किरति सर्वतो दिश श्रीनिवासमहादेशिकस्य कीर्तिचन्द्रिकाम्। अत्रापि तस्य महादेशि-कस्य यशश्चन्द्रिकाव्याप्तिमाकर्ण्य सर्वथा सतुष्टोऽस्मि।

**हत्तीराम्** - महाप्राज्ञ तस्य महादेशिकस्य यशश्चन्द्रिकां स्वीय यशश्चन्द्रिकया समुपबृंह्य सहस्रधा समुत्तेजितवानसि। अस्मिन् भगवतो ब्रह्मोत्सवे ब्रह्मरथेन भवन्तं सम्भावयते भगवन् श्रीनिवासः।

(इति बलात्कृत्य ब्रह्मरथे समावेशयति।)

**तत्रत्या सर्वापि पण्डितमण्डली-**

श्रीमन् पण्डितसार्वभौम भवता सिध्दान्तनिर्धारणे
यावत्साहसमास्थित न कृतवास्तावद्यतीन्द्रस्स्वयम् ।
नो वा श्रीनिगमान्तदेशिकमणिस्त्रय्यन्तकोटीरवान्
द्वैताद्वैतपदत्रवाश्च पुरुषः कोवाऽभवद्भूतले ॥ २५

तस्माच्छ्रीवासदेवस्य निदेशात्सकला जना·।
ब्रह्मन् ब्रह्मरथेन त्वा भावयन्ति समुत्सुका ॥ २६

(इति चतसृषु वीथिषु ब्रह्मरथं सञ्चार्य भगवन्मन्दिरद्वारदेशे वेङ्कटार्य मवतार्य श्रीनिवासदेवस्य सन्निधि नीत्वा भगवन्नीराजनानन्तरं भगवच्छेषभूततुलसीदामशेषपटपञ्चशठकोपत्रिस्तीर्थदान शेषवस्त्रदानादिना सम्भाव्य सपुष्पवर्ष भगवद्रामानुजसिध्दान्तनिर्धारणसार्वभौमबिरुदेन तं बहूकुर्वन्ति।)

तदानीमर्चकमुखेन **श्रीनिवासः** - वत्स वेङ्कटार्य कि ते भूयः प्रिय मुपहरामि।

**वेङ्कटार्यः** - (साञ्जलिबन्धम्) भगवन्नितःपरमपि प्रियमस्ति। तथाहि

दर्पोदग्रमहार्घहैतुककथाव्याप्तासु गोष्टीषु न
स्सर्वत्रैव जयं वितीर्य महती कीर्तिः प्रतिष्ठापिता।
मुक्तिश्चापि दि दित्सिता निरुपमा निर्दु·खगन्धोदया
नित्यानन्दमयी च मे किमपरं संप्रार्थनीयं मम ॥ १७

तथापीदमस्तु

(भरतवाक्यम्)

निर्दोषनित्यमधुराणि निरामयानि
शास्त्राणि नित्यसुभगानि जयन्तु लोके ।
नित्यादृता नृपतिभिस्सुहृदशां सभाश्च
वाक्सौरभी च सुभगा सतत कवीनाम् ।। २८

(निष्क्रान्तास्सर्वे)

**इति वेङ्कटार्यविजयवैजयन्त्यां**

**अष्टमोऽङ्कः**

**समाप्तमिदं नाटकम्**

# वेङ्कटार्यविजयवैजयन्ती

## Venkaṭāryavijayavaijayantī

By

**TIRUMALA BUKKAPAṬṬAṆAM ŚRĪNIVĀSĀCĀRYA**

Editor

**Prof B. RĀMA RĀJU**

**Other Samskṛt works edited**

1 Vasucaritram by Kālahastikavi - 1964

2. Jāmbavatīpariṇayam by Śrīkṛṣṇadēvarāya–1969

3 Śṛngāraśekharabhāṇam by Abhinvakālidāsa – 1969

4 Rāmāyaṇasāratilakam by Madhuravānī – 1972